न्तर्यम् ? स्थानार्थगुणप्रमाणतः। स्थानतः—"अकः सवर्णे दीर्घः" (अ० सू० ६।१।१०१)—दण्डाग्रम्, यूपाग्रम्। द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति। अर्थतः—वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः। पुंवद्भावेनान्तरतमः पुंशब्दोऽतिदिश्यते। गुणतः—पाकः, त्यागः, रागः। "चजोः कु घिण्ण्यतोः" (अ० सू० ७।३।५२) इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारो भवति, जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः। प्रमाणतः—अमुष्मै, अमूभ्याम्। "अदसोऽसेर्दादु दो मः" (अ० सू० ८।२।८०) इति ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः। स्थाने इति वर्त्तमाने पुनः स्थानेग्रहणं यत्राऽनेकमान्तर्यं सम्भवति तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्। चेता। स्तोता। प्रमाणतोऽकारो गुणः प्राप्तस्तत्र स्थानत आन्तर्यादेकारोकारौ भवतः। तमव्ग्रहणं किम्? वाग्घसति, त्रिष्टुब्भसति "झयो होऽन्यतरस्याम्" (अ० सू० ८।४।५२) इति हकारस्य पूर्वसवर्णे क्रियमाणे 'सोष्मणः सोष्माण' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्त' इति तृतीयाः, तमव्ग्रहणाद् ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः।

## उरण् रपरः ॥ ५१ ॥

उः स्थानेऽण् प्रसज्यमान एव रपरो वेदितव्यः। कर्त्ता। हर्त्ता। किरति। गिरति। द्वैमातुरः। त्रैमातुरः। उरिति किम्? खेयम्, (१)गेयम्। अण्ग्रहणं किम्? "सुधातुरकङ् च" (अ० सू० ४।१।९७)—सौधातकिः।

## अलोऽन्त्यस्य ॥ ५२ ॥

षष्ठीनिर्दिष्टस्य य उच्यते आदेशः सोऽन्त्यस्यालः स्थाने वेदितव्यः। 'इद्गोण्याः" (अ० सू० १।२।५०)—पञ्चगोणिः, दशगोणिः।

## ङिच्च ॥ ५३ ॥

ङिच्च य आदेशः सोऽनेकालपि अलोऽन्त्यस्य भवति। "आनङ् ऋतो द्वन्द्वे" (अ० सू० ६।३।२५)—होतापोतारौ, मातापितरौ। तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात्सर्वादेशस्तातङ् भवति—जीवताद्भवान्, जीवतात्त्वम्।

## आदेः परस्य ॥ ५४ ॥

परस्य कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम्। क्व च परस्य कार्यं शिष्यते? यत्र

---

उरण्—'ऋ' के स्थान में विहित 'अण्' प्राप्त्यवस्थामें ही अपने उत्तरावयव के रूप में 'र्' को परिगृहीत कर लेता है।

अलोन्त्यस्य—षष्ठी-निर्दिष्ट के स्थान में उपदिष्ट आदेश उस षष्ठी-निर्दिष्ट स्थानी के अन्त्य 'अल्' के स्थान में होता है।

ङिच्च—ङित् आदेश अनेक अलों से सङ्घटित होने पर भी स्थानी के अन्तिम अल् के स्थान में ही होता है।

आदेः—'पर' के स्थान में विहित कार्य को उसके आदि अल् के स्थान में ही समझना चाहिए।

---

मधु. अत्राप्यादेशः प्राप्नोति। अत्रान्यादेशविधानात्स एव प्राप्नोति। भवतु न दोष इति चेत्? न, तस्याप्यन्यः तस्याप्यन्य इति रीत्यानवस्थापातात्। तस्मात्परिभाषापक्ष एव श्रेयान्। स च यत्र स्थानषष्ठी तत्रोपतिष्ठते विधीनामेकवाक्यता च। तदा च विधानकाल एव प्राप्यमाणानामन्तरतम आदेश इत्यर्थो भविष्यति, तदाह—प्राप्यमाणेति।

(१) गेयमित्युदाहरणं न्यासपदमञ्जर्योर्न दृश्यते।

पञ्चमीनिर्द्देशः। तद्यथा—"ईदासः" (अ० सू० ७।२।८३)—आसीनो यजते; "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (अ० सू० ६।३।९७)—द्वीपम्, अन्तरीपम् , (१) प्रतीपम्, समीपम् ।

## अनेकाल् शित सर्वस्य ॥ ५५ ॥

अनेकाल् य आदेशः शिच्च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। "अस्तेर्भूः" (अ० सू० २।४।५१)—भविता, भवितुम् , भवितव्यम् । शित्त्वल्वपि—"जश्शसोः शिः" (अ० सू० ७।१।२०)—कुण्डानि तिष्ठन्ति, कुण्डानि पश्य ।

## स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्त्तत इति स्थानिवत् । स्थानिवदादेशो भवति स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु स्थान्यलाश्रयाणि कार्याणि वर्ज्जयित्वा। अनल्विधिरनेकाल्विधिरित्यर्थः। किमुदाहरणम्? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः। धात्वादेशो धातुवद्भवति—"अस्तेर्भूः" (अ० सू० २।४।५२), "ब्रुवो वचिः" (अ० सू० २।४।४३)। आर्धधातुकविषये प्रागेवादेशेषु कृतेषु धातोरिति तव्यादयो भवन्ति। भविता, भवितुम् , भवितव्यम् । वक्ता, वक्तुम्, वक्तव्यम्। अङ्गादेशोऽङ्गवद्भवति-केन, काभ्याम् , कैः । किमः कादेशे कृतेऽङ्गाश्रया इनदीर्घत्वैस्भावा भवन्ति। कृदादेशः कृद्वद्भवति—प्रकृत्य, प्रहृत्य । ल्यवादेशे कृते "ह्रस्वस्य पिति कृति तुक्" इति तुग्भवति। तद्धितादेशस्तद्धितवद्भवति—दाधियम् , अद्यतनम्। "कृत्तद्धितसमासाश्च" (अ० सू० १।२।४६) इति प्रातिपदिकसंज्ञा भवति। अव्ययादेशोऽव्ययवद्भवति—प्रस्तुत्य, प्रहृत्य, उपस्तुत्य। "अव्ययात्" (अ० सू० २।४।८२) इति सुब्लुग् भवति। सुबादेशः सुब्वद्भवति—वृक्षाय, प्लक्षाय। "सुपि च" (अ० सू० ७।३।१०२) इति दीर्घत्वं भवति। तिङादे शस्तिङ्वद्भवति—अकुरुताम् , अकुरुतम्। "सुप्तिङन्तं पदम्" (अ० सू० १।४।१४) इति पदसंज्ञा भवति। पदादेशः पदवद्भवति—ग्रामो वः स्वम् , जनपदो नः स्वम्। "पदस्य" इति रुत्वं भवति। वत्करणं किम्? स्थानी आदेशस्य संज्ञा मा विज्ञायीति। स्वाश्रयमपि यथा स्यात्। आहत, आवधिष्ट। "आङो यमहनः" (अ० सू० १।३।२८) इत्यात्मनेपदमुभयत्रापि भवति। आदेशग्रहणं किम्? आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्—पचतु—"एरुः" (अ० सू० ३।४।८६)। अनल्वि धाविति किम्? द्युपथितदादेशा न स्थानिवद्भवन्ति—द्यौः, पन्थाः, सः इति। "हल्ङ्याप्" (अ० सू० ६।१।६८) इति सुलोपो न भवति॥

## अचः परस्मिन् पूर्वविधौ ॥ ५७ ॥

पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः। अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवदिति वर्त्तते। अच इति स्थानिनिर्देशः। परस्मिन्निति निमित्तसप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविधौ कर्त्तव्ये स्थानिवद्भवति। पटयति। अवधीत्। बहुखट्वकः। पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिव-

---

अनेकाल्—अनेक अलों से सङ्घटित तथा शित् आदेश षष्ठी-निर्दिष्ट के समस्त स्वरूप के स्थान में होता है।

स्थानिवत्—एक अल्-स्वरूप स्थानी के स्थान में विहित कार्यों को छोड़कर शेष, अर्थात् अनेक अल्-स्वरूप स्थानी से विहित, आदेशों में उनके स्थानियों के धर्म का अतिदेश होता है।

अचः परस्मिन्—पूर्व के स्थान के होने वाले कार्य के प्रसङ्ग में पर को निमित्त मानकर विहित अजादेश स्थानि-सदृश हो जाते हैं।

---

(१) प्रतीपमिति न्यासपदमञ्जर्योर्न दृश्यते।

द्भावाद् "अत उपधायाः" (अ० सू० ७।२।११६) इति वृद्धिर्न भवति। अवधीत्। अतो लोपस्य स्थानिवद्भावाद् "अतो हलादेर्लघोः" (अ० सू० ७।२।७) इति हलन्तलक्षणा वृद्धिर्न भवति। बहुखट्वक इति। "आपोऽन्तरस्याम्" (अ० सू० ७।४।१५) इति ह्रस्वस्य स्थानिवद्भावाद् "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इति स्वरो न भवति। अच इति किम्? प्रश्नः, अक्राष्टाम्, आगत्य। प्रश्न इति प्रच्छेर्नङ्प्रत्यये, "च्छ्वोः शूडनुनासिके च" (अ० सू० ६।४।१९) इति छकारस्य शकारः परनिमित्तकस्तुकि कर्त्तव्ये न स्थानिवद्भवति। अक्राष्टामिति "झलो झलि" (अ० सू० ८।२।२६) इति सिचो लोपः परनिमित्तकः कृपेः षकारस्य "षढोः कः सि" (अ० सू० ८।२।४१) इति ककारे कर्त्तव्ये न स्थानिवद्भवति। आगत्येति "वा ल्यपि" (अ० सू० ६।४।३८) इति अनुनासिकलोपः परनिमित्तकस्तुकि कर्त्तव्ये न स्थानिवद्भवति। परस्मिन्निति किम्? युवजानिः, वधूटीजानिः, वैयाघ्रपद्यः, आदीध्ये। युवजानिरिति "जायाया निङ्" (अ० सू० ५।४।१३४) न परनिमित्तकः, तेन यलोपे न स्थानिवद्भवति। वैयाघ्रपद्य इति न परनिमित्तकः पादस्यान्तलोपः पद्भावं न प्रतिबध्नाति। आदीध्ये इति दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् "यीवर्णयोर्दीधीवेव्योः" (अ० सू० ७।४।५३) इति लोपो न भवति। पूर्वविधाविति किम्? हे गौः, बाभ्रवीयाः, नैधेयः। हे गौरिति वृद्धिरजादेशः सम्बुद्धिलोपे कर्त्तव्ये न स्थानिवद्भवति। बाभ्रवीया इति बाभ्रव्यस्यामी छात्रा इति "वृद्धाच्छः" (अ० सू० ४।२।११४) इति छः। "हलस्तद्धितस्य" (अ० ६।४।१५०) इति यकारलोपे कर्त्तव्ये अवादेशो न स्थानिवद्भवति। नैधेयः। "आतो लोप इटि च" (अ० सू० ६।४।६४) इत्याकारलोपः। "इतश्चानिञः" (अ० सू० ४।१।१२२) इति ढक्प्रत्ययलक्षणे प्रत्ययविधौ न स्थानिवद्भवति॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ ५८ ॥

पूर्वेणातिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। पदान्तविधिं प्रत्यजादेशो न स्थानिवद्भवति—कौ स्तः। यौ स्तः। तानि सन्ति। यानि सन्ति। "श्नसोरल्लोपः" (अ० सू० ६।४।१११) क्ङिति सार्वधातुक इति परनिमित्तकः, स पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत्स्यात्। अस्माद्वचनान्न भवति। द्विर्वचनविधिं प्रति न स्थानिवद्भवति—दद्ध्यत्र। मद्ध्वत्र। यणादेशः परनिमित्तकस्तस्य स्थानिवद्भावात् "अनचि च" (अ० सू० ८।४।४७) इति धकारस्य द्विर्वचनं न स्यात्, अस्माद्वचनाद्भवति। वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद्भवति—अप्सु यायावरः प्रवपेत पिण्डान्। यातेर्यङन्तात् "यश्च यङः" (अ० सू० ३।२।१७६) इति वरचि कृते अतो लोपः परनिमित्तकस्तस्य स्थानिवत्त्वात् "आतो लोप इटि च" (अ० सू० ६।४।६४) इत्याकारलोपः स्यात्, अस्माद्वचनान्न भवति। यलोप(१)—यलोपविधिं प्रत्यजादेशो न स्थानिवद्भवति—कण्डूतिः। कण्डूयतेः क्तिचि कृतेऽतोलोपः परनिमित्तकः, "लोपो व्योर्वलि" (अ०सू० ६।१।६६) इति यलोपे स्थानिवत्स्यात्, अस्माद्वचनान्न भवति। स्वर—स्वरविधिं प्रति अजादेशो न स्थानिवद्भवति—चिकीर्षकः, जिहीर्षकः। ण्वुलि कृतेऽतोलोपः परनिमित्तको लिति प्रत्ययात्पूर्वमुदात्तमिति स्वरे कर्त्तव्ये न स्थानिवद्भवतीति। सवर्ण—सवर्णविधिं प्रति अजादेशो न स्थानिवद्भवति—

---

न पदान्त—पदान्त-विधि, द्विर्वचन-विधि, यलोप-विधि, स्वर-विधि, सवर्ण-विधि, अनुस्वार-विधि, जश्-विधि तथा चर्-विधि के प्रति पर-निमित्तक अजादेश एवम् वरच्-प्रत्ययनिमित्तक अजादेश पूर्व-विधि में स्थानिवत् नहीं होते हैं।

---

(१) इतः प्रभृति यलोप स्वर इत्यादिरूपेण निर्विभक्तिक एव प्रतीकोद्धारो दृश्यते सर्वत्र। परन्तु अत्र सविभक्तिकः सप्तम्यन्त निर्देश एवोचितः। एकरूपतानिर्वाहार्थं च पदान्तद्विर्वचनवरेविधीनां व्याख्यारम्भेपि पदान्ते इत्यादिरूपेण उल्लेखो युक्तः। (श्रीना०)

शिण्ढि, पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने "रुधादिभ्यः श्नम्" (अ० सू० ३।१।७८), हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु "श्नसोरल्लोपः" (अ० सू० ६।४।१११) क्ङिति सार्वधातुके परनिमित्तकोऽनुस्वारस्य यद्यपि परसवर्णे कर्त्तव्ये न स्थानिवद्भवति। अनुस्वार— अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद्भवति—शिंषन्ति। पिंषन्ति। "नश्चापदान्तस्य झलि" (अ० सू० ८।३।२४) इति अनुस्वारे कर्त्तव्ये श्नसोरल्लोपो न स्थानिवद्भवति। दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवति—प्रतिदीव्ना। प्रतिदीव्ने। प्रतिदिवन्नित्येतस्य "भस्य" (अ० सू० ६।४।१२९) इत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च "अल्लोपोऽनः" (अ० सू० ६।४।१३४) इति अकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावात् "हलि च" (अ० सू० ८।२।७७) इति दीर्घत्वं न स्यात्। नह्ययं वकारो हल्पर इत्यस्माद्वचनाद्भवति। जश्—जश्विधिं प्रत्यजादेशो न स्थानिवद्भवति—सग्धिश्च मे सपीतिश्च मे। बब्धान्ते हरी धानाः। अदेः क्तिनि "बहुलं छन्दसि" (अ० सू० २।४।३९) इति घस्लादेशः, "घसिभसोर्हलि" (अ० सू० ६।४।१००) इत्युपधालोपः, "झलो झलि" (अ० सू० ८।२।२६) इति सकारलोपः, "झषस्तथोर्धोऽधः" (अ० सू० ८।२।४०) इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् "झलां जश् झशि" (अ० सू० ८।४।५३) इति धकारस्य जश्त्वं न स्यात्, अस्माद्वचनाद्भवति। समाना ग्धिः, समानस्य सभावः, सग्धिः। बब्धामिति—भसेर्लोड्द्विवचने शपः श्लुः, द्विर्वचनमभ्यासकार्यम्, "घसिभसोर्हलि च" (अ० सू० ६।४।१००) इति उपधालोपः, "झलो झलि" (अ० सू० ८।२।२६) इति सकारलोपः, "झषस्तथोर्धोऽधः" (अ० सू० ८।२।४०) इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् "झलां जश् झशि" (अ० सू० ८।४।५३) इति जश्त्वं न स्यात्, अस्माद्वचनाद्भवति। चर्—चर्विधिं प्रत्यजादेशो न स्थानिवद्भवति—जक्षतुः। जक्षुः। अक्षन्नमीमदन्त पितरः। लिड्द्विवचनबहुवचनयोरदेर्घस्लादेशः, "गमहनजनखनघसाम्" (अ० सू० ६।४।९८) इत्युपधालोपः, द्विर्वचनम्, अभ्यासकार्यम्। तत्रोपधालोपस्य स्थानिवत्त्वात् "खरि च" (अ० सू० ८।४।५५) इति घकारस्य चर्त्वं न स्यात्, अस्माद्वचनाद्भवति। "शासिवसिघसीनां च" (अ०सू० ८।३।६०) इति षत्वम्। अक्षन्नित्यदेर्लुङ्बहुवचने घस्लादेशश्च्लेरागतस्य, "मन्त्रे घसह्वर" (अ० सू० २।४।८०) इति लुक्, "गमहनजनखनघसाम्" (अ० सू० ६।४।९८) इत्युपधालोपः। तस्य स्थानिवत्त्वात् "खरि च" (अ० सू० ८।४।५५) इति चर्त्वं न स्यात्, अस्माद्वचनाद्भवति। स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्भवति। अन्यत्र तु स्थानिवदेव। तेन बहुखट्वकः, किर्योः, गिर्योः, वाय्वोरिति स्थानिवत्त्वात् स्वरदीर्घयलोपा न भवन्ति॥

## द्विर्वचनेऽचि॥ ५९॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव कर्त्तव्ये। रूपातिदेशश्चायं नियतकालः। तेन द्विर्वचने पुनरादेशरूपमेवावतिष्ठते। आल्लोपोपधालोपयणयवायावादेशाः प्रयोजनम्। आल्लोपः—पपतुः, पपुः। "आतो लोप इटि च" (अ० सू० ६।४।६४) इत्याकारलोपे कृते तस्य स्थानिवद्भावात् "एकाच" इति द्विर्वचनं भवति। उपधालोपः—जघ्नतुः, जघ्नुः। "गमहनजनखनघसाम्" (अ० सू० ६।४।९८) इत्युपधालोपे कृते, अनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद्वचनाद्भवति। णिलोपः—आटिटत्। आटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वात् "अजादेर्द्वितीयस्य" (अ० सू० ६।१।२) इति टिशब्दस्य द्विर्वचनं भवति। यण्—चक्रतुः, चक्रुः। करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवत्त्वाद्भवति। अयवायावादेशाः— निनय, निनाय; लुलव-लुलाव। नयतेर्लुनातेश्चोत्तमे णलि गुणे कृते वृद्धौ चायवायावा-

---

द्विर्वचनेऽचि—द्वित्व-निमित्ती अच् के परे अजादेश केवल द्वित्वविधि में हीं स्थानिवत् होता है।

देशाः। तेषां स्थानिवत्त्वा(१)न्नेलोनैलाविति द्विर्वचनं भवति। द्विर्वचन इति किम्? जग्ले, मम्ले। श्रवणमाकारस्य न भवति। द्विर्वचननिमित्त इति किम्? दुद्यूषति। ऊठि यणादेशो न स्थानिवद्भवति। अचीति किम्? जेघ्रीयते, देध्मीयते। "ई घ्राध्मोः" (अ० सू० ७।४।३१) "यङि च" (अ०७।४।३०) इति ईकारादेशः। तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात्। अज्ग्रहणान्न भवति॥

## अदर्शनं लोपः॥ ६०॥

अदर्शनमश्रवण(२)मनुच्चारणमनुपलब्धिरभावो वर्णविनाश इत्यनर्थान्तरम्। एतैः शब्दैर्योऽर्थोऽभिधीयते तस्य लोप इतीयं संज्ञा भवति। अर्थस्येयं संज्ञा न शब्दस्य। प्रसक्तस्यादर्शनं लोपसंज्ञं भवति। "गोधाया ढ्रक्" (अ० सू० ४।१।१२९)—गौधेरः, पचेरन्। जीवेरदानुक्—जीरदानुः। स्त्रिवेर्मनिन्—आस्त्रेमाणम्। यकारवकारयोरदर्शन-मिहोदाहरणम्। अपरस्याऽनुबन्धादेः प्रसक्तस्य लोपप्रदेशाः—"लोपो व्योर्वलि" (अ० सू० ६।१।६६) इत्येवमादयः॥

## प्रत्ययस्य लुक्श्लुलुपः॥ ६१॥

अदर्शनमिति वर्त्तते। प्रत्यादर्शनस्य लुक्, श्लु, लुप् इत्येताः संज्ञा भवन्ति। अनेकसं-ज्ञाविधानाच्च तद्भावितग्रहणमिह विज्ञायते। लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञं भवति। श्लुसंज्ञाभावितं श्लुसंज्ञं भवति। लुप्संज्ञाभावितं लुप्संज्ञं भवति। तेन संज्ञानां संकरो न भवति। विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते। अत्ति। जुहोति। वरणाः। प्रत्ययग्रहणं किम्? अगस्तयः, कुण्डिनाः। लुक्श्लुलुप्प्रदेशाः—"लुक्तद्धितलुकि" (अ० सू० १।२।४९), "जुहोत्यादिभ्यः श्लुः" (अ० सू० २।४।७५), "जनपदे लुप्" (अ० सू० ४।२।८१) इत्येवमादयः॥

## प्रत्ययलोपे प्रत्ययलक्षणम्॥ ६२॥

प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं तु नाम स्यादिति सूत्रमिदमारभ्यते। प्रत्यय-लोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कार्यं भवति। अग्निचित्, सोमसुत्, अधोक् इत्यत्र सुप्तिङोर्लुप्तयोः "सुप्तिङन्तं पदम्" (अ० सू० १।४।१४) इति पद-संज्ञा भवति। अधो-गिति दुहेर्लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम्। प्रत्यय इति वर्त्तमाने पुनः प्रत्ययग्रहणं किम्? कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत्—आघ्नीय, सङ्ग्मीय। हनिगम्योर्लिङात्मनेपदे "लिङः सलोपोऽनन्त्यस्य" (अ० सू० ७।२।७९) इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपः, तत्र प्रत्ययलक्षणेन झलीत्यनुनासिकलोपो न भवति। प्रत्ययलक्षणमिति किम्? रायः कुलं रैकुलम्, गवे हितं गोहितम्। आयवा-देशौ न भवतः, वर्णाश्रयत्वात्॥

## न लुमताङ्गस्य॥ ६३॥

पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते। लुमताशब्देन लुप्ते प्रत्यये

---

अदर्शनम—प्राप्त के अदर्शन की 'लोप' संज्ञा होती है।

प्रत्ययस्य—प्रत्यय के अदर्शन की तीन संज्ञाएँ हैं—'लुक्', 'श्लु' तथा 'लुप्'।

प्रत्यय—प्रत्यय के लुप्त हो जाने पर भी प्रत्यय-निमित्तक कार्य की विधि होती है।

न लुमता—'लु' जिसमें हो ऐसे (लुक्, श्लु, लुप्) शब्दों से जहाँ प्रत्यय का अदर्शन हुआ हो वहाँ प्रत्यय-निमित्तक कार्य नहीं होता है।

---

(१) नेनैलोलाविति–इति पदमञ्जरीधृतपाठः।

(२) इह दर्शनं ज्ञानमुपलब्धिस्तच्च शब्दानुशासनप्रस्तावाच्छब्दविषयं सच्छ्रवणं भवतीत्याह—अश्रवणमिति।

यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न भवति । गर्गाः । मृष्टः । जुहुतः । यञश्पोर्लुमता-लुप्तयोरङ्गस्य गुणवृद्धी न भवतः । लुमतेति किम् ? (१) कार्यते । अङ्गस्येति किम् ? पञ्च, सप्त, पयः, साम ॥

## अचोऽन्त्यादि टि ॥ ६४ ॥

अच इति निर्द्धारणे षष्ठी । जातोवेकवचनम् । अचां संनिविष्टानां योऽन्त्योच् तदादि शब्दरूपं टिसंज्ञं भवति । अग्निचित्—इच्छब्दः । सोमसुत्—उच्छब्दः । आताम्, आथाम्—आम्शब्दः । पचेते । पचेथे । टिप्रदेशाः—"टित आत्मनेपदानां टेरे" (अ० सू० ३।४।७९) इत्येवमादयः ॥

## अलोन्त्यात् पूर्व उपधा ॥ ६५ ॥

धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्वो यो वर्णः सोऽलेवोपधासंज्ञो भवति । पच्, पठ्—अकारः । भिद्, छिद्—इकारः । बुध्, युध्—उकारः । वृत्, वृध्—ऋकारः । अल इति किम् ? शिष्टः, शिष्टवान् । समुदायात् पूर्वस्य मा भूत् । उपधाप्रदेशाः—"अत उपधायाः" (अ० सू० ७।२।११६) इत्येवमादयः ।

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥

तस्मिन्निति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य । "इको यणचि" (अ० सू० ६।१।७७)—दध्युदकम्, मध्विदम्, पचत्योदनम् । निर्दिष्टग्रहणमानन्तर्यार्थम्, अग्निचिदत्रेति व्यवहितस्य मा भूत् ॥

## तस्मादित्युत्तरस्य ॥ ६७ ॥

निर्दिष्टग्रहणमनुवर्त्तते । तस्मादिति पञ्चम्यर्थनिर्देश उत्तरस्यैव कार्यं भवति न पूर्वस्य । "तिङ्ङतिङः" (अ० सू० ८।१।२८)—ओदनं पचति । इह न भवति—पचत्यो-दनमिति ॥

## स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति न वाह्योऽर्थः, शब्दसंज्ञां वर्जयित्वा । शब्देनार्थावगतेरर्थे कार्यस्यासंभवात् तद्वाचिनां शब्दानां संप्रत्ययो मा भू-दिति सूत्रमिदमारभ्यते । "अग्नेर्ढक्" (अ० सू० ४।२।३३)—आग्नेयमष्टाकपालं निर्वपेत् । अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः,(२) पावको, धूमकेतुरिति, नातः

---

अचोऽन्त्यादि—शब्द-घटक अच्-समूह मे अन्तिम अच् हो आदि में जिस शब्द-स्वरूप का उसकी 'टि' संज्ञा होती है ।

अलोन्त्यात्—धात्वादि वर्ण-समुदाय में अन्त्य अल् से पूर्व अल् की 'उपधा' संज्ञा होती है ।

तस्मिन्निति—सप्तमी-विभक्ति-युक्त शब्द को निमित्त मानकर विधीयमान कार्य उस सप्तम्यन्त से अव्यवहित पूर्व के स्थान में होता है ।

तस्मादित्यु—पञ्चम्यन्त को निमित्त मानकर विधीयमान कार्य उस पञ्चम्यन्त से अव्यवहित उत्तरवर्त्ती के स्थान में होता है ।

स्वं रूपम्—शब्द की 'उपधा' प्रभृति संज्ञाओं के क्षेत्र से अतिरिक्त स्थल में इस शास्त्र में स्थानिभूत शब्द का स्वरूप ही ग्राह्य होता, उसके पर्याय अथवा अर्थ नहीं ।

---

(१) न्यासे लुमतेति किम् ? कार्यते इति पाठः पञ्च, सप्त, पयः, साम इत्यस्यानन्तरं दृश्यते ।

(२) अत्र ज्वलनस्येत्यादि रूपेण षष्ठ्यन्तपाठो गरीयान् (श्रीना०)

प्रत्ययो भवति। "उदश्वितोऽन्यतरस्याम्" ( अ० सू० ४।२।१९ )—औदश्वित्कम्, औदश्वितम्। तक्रमरिष्टं कालशेषं दण्डाहतं मथितमिति नातः प्रत्ययो भवति। अशब्दसंज्ञेति किम्? "दाधाध्वदाप्" ( अ० सू० १।१।२० ), "तरप्तमपौ घः" ( अ० सू० १।१।२२ ) इति घुग्रहणेषु घग्रहणेषु च संज्ञिनां ग्रहणं न संज्ञायाः। ॐसित्तद्विशेषाणां वृक्षाद्यर्थम्ॐ। सित्निर्देशः कर्तव्यः। ततो वक्तव्यं तद्विशेषाणां ग्रहणम् भवतीति। किं प्रयोजनम्? वृक्षाद्यर्थम्—"विभाषा वृक्षमृगतृण" ( अ० सू० २।४।१२ ) इति। प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः। ॐपित्पर्यायवचनस्य च स्वाद्यर्थम्ॐ। पित्निर्देशः कर्त्तव्यः। ततो वक्तव्यं पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां चेति। किं प्रयोजनम्? स्वाद्यर्थम्। स्वे पुषः, स्वपोषं पुष्टः, रैपोषम्, धनपोषम्, अश्वपोषम्, गौपोषम्। ॐजित्पर्यायवचनस्यैव राजाद्यर्थम्ॐ। जित्निर्देशः कर्त्तव्यः। ततो वक्तव्यं पर्यायवचनस्यैव ग्रहणं भवतीति, न स्वरूपस्य, नापि तद्विशेषाणाम्। किं प्रयोजनम्? राजाद्यर्थम्। "सभा राजाऽमनुष्यपूर्वा" ( अ० सू० २।४।२३ )—इनसभम्, ईश्वरसभम्। तस्यैव न भवति—राजसभा। तद्विशेषाणां च न भवति—पुष्पमित्रसभा, चन्द्रगुप्तसभा। ॐझित्तद्विशेषाणां च मत्स्याद्यर्थम्ॐ। झित्निर्देशः कर्त्तव्यः। ततो वक्तव्य तस्य च ग्रहणं भवति तद् विशेषाणां चेति। किं प्रयोजनम्? मत्स्याद्यर्थम्। "पक्षिमत्स्यमृगान् हन्ति" ( अ० सू० ४।४।३५ ) इति ठक्—पाक्षिकः, मात्स्यिकः। तद्विशेषाणाम्—शाकुनिकः। पर्यायाणां न भवति—अजिह्मान् हन्ति, अनिमिषान् हन्तीति। अस्येष्यते—मीनान् हन्तीति मैनिकः॥

## अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति स्वस्य च रूपस्य प्रत्ययं वर्जयित्वा। "आद्गुणः" ( अ० सू० ६।१।८७ ), "अस्य च्वौ" ( अ० सू० ७।४।३२ ), "यस्येति च" ( अ० सू० ६।४।१४८ )—स्वरानुनासिक्यकालभिन्नस्य ग्रहणं भवति। उदित्खल्वपि—"चुटू" ( अ० सू० १।३।७ ), "लशक्वतद्धिते" ( अ० सू० १।३।८ )—चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति। अप्रत्यय इति किम्? "सनाशंसभिक्ष उः" ( अ० सू० ३।२।१६८ ), "असांप्रतिके" ( अ० सू० ४।३।९ ) दीर्घो न भवति॥

---

**सित्तविशेषाणाम्**—मौलिक सकार की इत्संज्ञा ( तथा लोप ) करके इस शब्द शास्त्र में जिन शब्दों का उपदेश किया है ( यथा—वृक्षस् वृक्ष' मृगस् 'मृग' आदि ) वे शब्द स्वरूपग्राहक नहीं प्रत्युत स्ववाच्य सामान्यपदार्थान्तर्गत विशेषपदार्थ ( यथा—वृक्षस् = वृक्ष, प्लक्ष, न्यग्रोध आदि ) के वाचक शब्दस्वरूपपरक होते हैं—ऐसा कहना चाहिए जिससे वृक्ष आदि शब्दों से तद्विशेषवाचक शब्दों का ग्रहण हो सके।

**पित्पर्याय**—पित् शब्दस्वरूप अपने पर्याय शब्दस्वरूप के भी ग्राहक होते हैं—ऐसी व्यवस्था स्वपोष आदि शब्दों की उपपत्ति के लिए करनी चाहिए।

**जित्पर्याय**—जित् ( जिसमें जकार की इत्संज्ञा हुई हो ) शब्दस्वरूप अपने पर्याय शब्दस्वरूप के हीं ग्राहक होते हैं—ऐसा निर्देश 'सभाराजा' आदि सूत्र में राजन् शब्द के अग्रहण तथा तत्पर्याय 'इन' आदि शब्दों के सङ्ग्रहण के लिए करना चाहिए।

**झित्तद्विशेषाणाम्**—झित् शब्दरूप अपने सामान्य तथा विशेष दोनों अर्थों के प्रतिपादक शब्दस्वरूपों के ग्राहक होते हैं—ऐसा विधान 'पक्षिमत्स्य' आदि सूत्र में 'मत्स्य' आदि शब्दों से सामान्यार्थक' 'मत्स्य' शब्द तथा विशेषार्थक 'पाठीन' आदि शब्दों के ग्रहण के लिए करना चाहिए।

**अणुदित्**—गृह्यमाण अण् तथा उदित् अपने स्वरूप के साथ-साथ अपने सवर्ण के भी ग्राहक होते हैं, प्रत्यय को छोड़कर।

## तपरस्तत्कालस्य ॥ ७० ॥

तः परो यस्मात्सोऽयं तपरः, तादपि परस्तपरः। तपरो वर्णस्तत्कालस्यात्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति स्वस्य च रूपस्य। विध्यर्थमिदम्। अणिति नानुवर्तते। अणामन्येषां च तपराणाम् इदमेव ग्रहणकशास्त्रम्। "अतो भिस ऐस्" (अ० सू० ७।१।९) इत्येवमादिषु पूर्वग्रहणकशास्त्रं न प्रवर्तत एव। अतपरा अणस्तस्यावकाशः। किमुदाहरणम्? 'अतो भिस ऐस्' (अ० सू० ७।१।९)—वृक्षैः, प्लक्षैः। "विड्वनोरस्यात्" नासिक (अ० सू० ६।४।४१)—अब्जाः गोजाः तत्कालस्येति किम्? खट्वाभिः, मालाभिः॥

## आदिरन्त्येन सहेता ॥ ७१ ॥

आदिरन्त्येनेत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति स्वस्य च रूपस्य। अण्, अक्, अच्, हल्, सुप्, तिङ्। अन्त्येनेति किम्? सुडिति तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत्॥

## येन विधिस्तदन्तस्य ॥ ७२ ॥

येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य 'समुदायस्य' ग्राहको भवति स्वस्य च रूपस्य। "एरच्" (अ० सू० ३।३।५६)—इवर्णान्तादच्प्रत्ययो भवति—चयः, जयः, अयः। "ओरावश्यके" (अ० सू० ३।१।१२)—उवर्णान्ताद् ण्यद्भवति। अवश्यलाव्यम्, अवश्यपाव्यम्। ॐसमासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यःॐ। द्वितीयान्तं श्रितादिभिः सह समस्यते—कष्टश्रितः। इह मा भूत्—कष्टं (१)परमश्रित इति। प्रत्ययविधौ—"नडादिभ्यः फक्" (अ० सू० ०।१।९९)—नडस्यापत्यं नाडायनः। इह मा भूत्—सूत्रनडस्यापत्यं सौत्रनाडिः। किमविशेषेण? नेत्याह। ॐउगिद्वर्णग्रहणवर्जमिति वाच्यम्ॐ। उगितश्चेति ङीप्प्रत्ययस्तदन्तादपि भवति—भवती, अतिभवती। वर्णग्रहणम्—"अत इञ्" (अ० सू० ४।१।९५)—दाक्षिः, प्लाक्षिः। ॐयस्मिन् विधिस्तदादावल्ग्रहणेॐ। अल्ग्रहणेषु यस्मिन् विधिस्तदादाविति वक्तव्यम्। "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" (अ० सू० ६।४।७७) इति—श्रियः, भ्रुवः॥

## वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ ७३ ॥

यस्येति समुदाय उच्यते। अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतस्तच्छब्दरूपं

---

तपरः—'त्' है पर में जिसका और 'त्' से परवर्त्ती वर्ण अपने समकालोच्चारणीय-सवर्ण तथा स्वरूप के ग्राहक होते हैं।

आदिरन्त्येन—इत्संज्ञक अन्त्य वर्ण के साथ उपदिश्यमान आदि वर्ण मध्य-गत वर्ण-समुदाय तथा स्वरूप का ग्राहक होता है।

येन विधिः—जिस विशेषण से किसी कार्य का विधान होता है वह तदन्त (विशेषणान्त) समुदाय तथा स्वरूप का ग्राहक होता है।

समास—समास तथा प्रत्ययविधि के विषय में तदन्तविधि का प्रतिषेध समझना चाहिये।

उगित्—उगित् तथा वर्णग्रहण के विषयों को छोड़कर ही उक्त प्रतिषेध समझना चाहिए।

यस्मिन् विधिः—अल्ग्रहण में जिसके परे रहते विधि की जाती है तदादि के परे भी विधि अवगन्तव्य है।

वृद्धिर्यस्याचाम्—शब्द-घटक अच्-समुदाय में आदि अच् के वृद्धिसंज्ञक होने पर वह शब्द 'वृद्ध' कहलाता है।

---

(१) सम्बुध्यन्तमेतत् इति पदमञ्जरी।

वृद्धसंज्ञं भवति। अचामिति जातौ बहुवचनम्। शालीयः। मालीयः। औपगवीयः। कापटवीयः। आदिरिति किम्? सभासन्नयने भवः साभासन्नयनः। ॐवा नामधेयस्य वृद्धसंज्ञा वक्तव्याॐ। दैवदत्तीयाः, दैवदत्ताः। ॐगोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम्ॐ। घृतप्रधानो रौढिः घृतरौढिः, तस्य छात्रा घृतरौढीयाः। ओदनप्रधानः पाणिनिरोदनपाणिनिस्तस्य छात्रा ओदनपाणिनीयाः। वृद्धाम्भीयाः। वृद्धकाश्यपीयाः। ॐजिह्वाकात्यहरितकात्यवर्जम्ॐ। जैह्वाकाताः। हारितकाताः॥

## त्यदादीनि च ॥ ७४ ॥

यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते(१)। इह तु न सम्बध्यते(२)। त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति। त्यदीयम्। तदीयम्। एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। त्वादायनिः। मदीयम्। मादायनिः। भवदीयम्। किमीयम्॥

## एङ् प्राचां देशे ॥ ७५ ॥

यस्याचामादिग्रहणमनुवर्त्तते। एङ् यस्याचामादिस्तत्प्राचां देशाभिधाने वृद्धसंज्ञं भवति। एणीपचनीयः। भोजकटीयः। गोनर्दीयः। एङिति किम्? आहिच्छत्रः, कान्यकुब्जः। प्राचामिति किम्? देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो दैवदत्तः। देश इति किम्? गोमत्यां भवा मत्स्या गौमताः।

(३) प्रागुदञ्चौ विभजते हंसः (४) क्षीरोदके यथा।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य प्रथमः पादः॥१॥

---

वा नाम—नामधेय शब्दों की विकल्प से 'वृद्ध' संज्ञा समझनी चाहिए।

गोत्रान्तात्—गोत्रप्रत्ययान्त शब्दों से असमस्त शब्दों की तरह प्रत्यय की उत्पत्ति समझनी चाहिए।

जिह्वाकात्य—जिह्वाकात्य और हरितकात्य—इन दो गोत्र-प्रत्ययान्त शब्दों से असमस्त शब्दों की तरह प्रत्ययोत्पत्ति नहीं होती है—ऐसा समझना चाहिए।

त्यदादीनि—त्यद आदि शब्दसमुदाय की भी 'वृद्ध' संज्ञा होती है।

एङ् प्राचाम्—प्राच्यदेशाभिधायी शब्दों में वर्त्तमान स्वरों में जिसका आदि स्वर एङ्प्रत्याहारान्तर्गत हो उस शब्द की 'वृद्ध' संज्ञा होती है।

प्रथमाध्याय का प्रथम पाद समाप्त हुआ।

---

(१) अनुवर्तते इति। तत्र प्रयोजनवत्त्वात् यस्याचामादिरेङिति सम्बन्धसम्भवाच्च।

(२) इह तु न सम्बध्यत इतीति। अयोग्यत्वात् निर्द्धारणस्य सजातीयविषयत्वात् त्यदादीनां चाजात्मकत्वाभावात् न ह्यस्ति सम्भव इति।

(३) प्रागुदीचम्, प्रागुदीच इति पाठान्तरे।

(४) क्षीरोदकमिति पाठान्तरम्।

# अथ प्रथमाध्यायस्य द्वितीयः पादः

## गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥

अतिदेशोऽयम् । गाङिति इङादेशो गृह्यते, न 'गाङ् गतौ' इति, ङकारस्यानन्यार्थत्वात् । कुटादयोऽपि—'कुट कौटिल्ये' इत्येतदारभ्य यावत् 'कुङ् शब्दे' इति । एभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्यया ङितो भवन्ति । ङिद्वद्भवन्तीत्यर्थः । गाङः—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । कुटादिभ्यः—कुटिता, कुटितुम्, कुटितव्यम्(१) । उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम् । अञ्णिदिति किम् ? उत्कोटयति, उच्चुकोट, उत्कोटकः, उत्कोटो वर्त्तते । ॐव्यचेः कुटादित्वमनसीति वक्तव्यम्ॐ । (२) विचिता । विचितुम् । विचितव्यम् । अनसीति किम् ? उरुव्यचाः ॥

## विज इट् ॥ २ ॥

'ओविजी भयचलनयोः' । अस्मात्पर इडादिः प्रत्ययो ङिद्भवति । उद्विजिता । उद्विजितुम् । उद्विजितव्यम् । इडिति किम् ? उद्वेजनम्, उद्वेजनीयम् ॥

## विभाषोर्णोः ॥ ३ ॥

इडिति वर्तते । 'ऊर्णुञ् आच्छादने' अस्मात् पर इडादिः प्रत्ययो विभाषा ङिद्भवति । प्रोर्णुविता । प्रोर्णविता । इडित्येव—प्रोर्णवनम्, प्रोर्णवनीयम् ॥

## सार्वधातुकमपित् ॥ ४ ॥

सार्वधातुकं यदपित्तन्ङिद्वद्भवति । कुरुतः । कुर्वन्ति । चिनुतः । चिन्वन्ति । सार्वधातुकमिति किम् ? कर्त्ता, कर्तुम्, कर्त्तव्यम् । अपिदिति किम् ? करोति, करोषि, करोमि ॥

## असंयोगाल्लिट् कित् ॥ ५ ॥

अपिदिति वर्त्तते । असंयोगान्ताद्धातोः परो लिट् प्रत्ययोऽपित् किद्भवति । बिभिदतुः । बिभिदुः । चिच्छिदतुः । चिच्छिदुः । ईजतुः । ईजुः । असंयोगादिति किम् ? सस्रंसे, दध्वंसे । अपिदित्येव—बिभेद (३) ॥

---

गाङ्कुटादि—'इङ्' के स्थान में आदिष्ट 'गाङ्' एवम् 'कुट कौटिल्ये' से लेकर 'कुङ् शब्दे' तक के धातुओं से परवर्ती ञित् तथा णित् प्रत्यय ङित्-प्रत्यय-सदृश होते हैं ।

व्यचेः—अस्-भिन्न प्रत्ययों के परे ही व्यच् धातु कुटादि के अन्तर्गत माना जाता है ।

विज् इट—'ओविजी भय-चलनयोः' इस धातु से पर विहित इट् आदि प्रत्यय ङित् होते हैं ।

विभाषोर्णोः—'ऊर्णुञ् आच्छादने' धातु से पर विहित इडादि प्रत्यय विकल्प से ङित् होते हैं ।

सार्वधातुक—पित्-भिन्न सार्वधातुक ङित् के सदृश होते हैं ।

असंयोगात्—असंयोगान्त धातु से पर-विहित अपित् लिट् कित् होता है ।

---

(१) कुटितेत्याद्युदाहरणस्थाने उत्कुटिता इति न्यासधृतपाठः ।

(२) उद्विचितेत्यादिः पदमञ्जरीसम्मतः पाठः । न्यासे तु यथाश्रुत एव पाठः ।

(३) बिभेदिथ इति क्वचित्कः पाठः ।

## ईन्धिभवतिभ्यां च ॥ ६ ॥

ईन्धिभवतीत्येताभ्यां परो लिट्प्रत्ययः किद्भवति। समीधे दस्युहन्तमम्। पुत्र इधे अथर्वणः। भवतेः खल्वपि—बभूव, बभूविथ। इन्धेः संयोगार्थं ग्रहणम्। भवतेः पिदर्थम्। अत्रेष्टिः—*श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्* श्रेथतुः। श्रेथुः। ग्रेथतुः। ग्रेथुः। देभतुः। देभुः। परिपस्वजे। परिपस्वजाते॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥

मृड, मृद, गुध, कुष, क्लिश, वद, वस इत्येतेभ्यः परः क्त्वाप्रत्ययः किद्भवति। "न क्त्वासेट्" इति प्रतिषेधं वक्ष्यति, तस्यायं पुरस्तादपकर्षः। गुधकुषक्लिशीनां तु "रलो व्युपधात्" इति विकल्पे प्राप्ते नित्यार्थं वचनम्। मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा॥

## रुदविदमुषग्रहिस्वपिप्रच्छः सँश्च ॥ ८ ॥

रुद, विद, मुष, ग्रहि, स्वपि, प्रच्छ इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः। रुदविदमुषीणां "रलो व्युपधात्" इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम्। ग्रहेर्विध्यर्थमेव। स्वपिप्रच्छ्योः सन्नर्थं ग्रहणम्। किदेव हि क्त्वा। उदित्वा। रुरुदिषति। विदित्वा। विविदिषति। मुषित्वा। मुमुषिषति। गृहीत्वा। जिघृक्षति। सुप्त्वा। सुषुप्सति। पृष्ट्वा। पिपृच्छिषति। ग्रहादीनां कित्वात्संप्रसारणं भवति, "किरश्च पञ्चभ्य" इति प्रच्छेरिडागमः॥

## इको झल् ॥ ९ ॥

सन्नित्यनुवर्त्तते। क्त्वेति निवृत्तम्। इगन्ताद्धातोः परो झलादिः सन् किद्भवति। चिचीषति। तुष्टूषति। चिकीर्षति (१)। इक इति किम्? पिपासति, तिष्ठासति। झलिति किम्? शिशयिषते। किमर्थमिदमुच्यते? गुणो मा भूदिति। "अज्झनगमां सनि" इति दीर्घत्वं गुणस्य बाधकं भविष्यति। यथैव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बाधेत। तस्माद्दीर्घत्वस्यावकाशदानाय कित्वमिदमारभ्यते। चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वात् णिलोपेन बाध्यते—ज्ञीप्सति॥

इकः कित्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत्। अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम्। दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्॥

## हलन्ताच्च ॥ १० ॥

(२) इकः, सन्, झल्किदिति वर्त्तते। (३) समीपवचनोऽन्तशब्दः। हल् चासावन्तश्च

---

**ईन्धि**—इन्ध धातु तथा भू धातु से पर से विहित लिट् प्रत्यय भी कित् होता है।

**श्रन्थि-ग्रन्थि**—श्रन्थि, ग्रन्थि, दम्भि, तथा स्वञ्जि धातुओं से पर लिट् प्रत्यय को भी कित् समझना चाहिए।

**मृडमृद**—मृड, मृद, गुध, कुष, क्लिश, वद, वस—इन धातुओं से विहित क्त्वा-प्रत्यय कित् होता है।

**रुदविद**—रुद, विद, मुष, ग्रहि, स्वपि, प्रच्छ—इन धातुओं से विहित क्त्वा-प्रत्यय तथा सन्-प्रत्यय कित् होते हैं।

**इको झल्**—इगन्त धातु से विहित झलादि सन् कित् होता है।

**हलन्ताच्च**—इक्-समीपस्थ हल् से पर झलादि सन् कित् होता है।

---

(१) चिकीर्षति इत्युदाहरणं न्यासपदमञ्जर्योर्न व्याख्यातम्।
(२) न्यासस्वरसात् इकः इति वृत्तिग्रन्थस्थः पाठो न प्रतीयते।
(३) समीपवचनोयमन्तशब्द इति न्यासीयः पाठः।

हलन्तः। इगन्तादि(१)क्समीपाद्धलः परः सन् झलादिः किद्भवति। बिभित्सति। बुभुत्सते। इक इत्येव—यियक्षते। झलित्येव—विवर्त्तिषते। दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्—धीप्सति, धिप्सति॥

## लिङ्सिचावात्मनेपदेषु॥ ११॥

हलन्तादिको झल्किदिति वर्त्तते। सन्निति निवृत्तम्। इगन्तादिक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः। भित्सीष्ट। भुत्सीष्ट। सिचि खल्वपि—अभित्त, अबुद्ध। इक इत्येव—यक्षीष्ट, अयष्ट। संप्रसारणं हि स्यात्। आत्मनेपदेष्विति किम्? अस्राक्षीत्, अद्राक्षीत्। "सृजिदृशोर्झल्यमकिति" इत्यमागमो न स्यात्। हलन्तादित्येव—चेषीष्ट, अचेष्ट। गुणो न स्यात्। झलित्येव—वर्त्तिषीष्ट, अवर्त्तिष्ट। गुणो न स्यात्। लिङ्सिचाविति किम्? द्वेष्टा, द्वेक्ष्यति॥

## उश्च॥ १२॥

(२)ऋवर्णान्ताद्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः। कृषीष्ट, हृषीष्ट। सिचः खल्वपि—अकृत, अहृत। झलित्येव—वरिषीष्ट, अवरिष्ट। "वृतो वा"—अवरीष्ट (३)॥

## वा गमः॥ १३॥

लिङ्सिचावात्मनेपदेष्विति वर्त्तते। गमेर्धातोः परौ लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः। संसीष्ट। संगंसीष्ट। सिचः खल्वपि—समगत, समगंस्त। कित्त्वपक्षे अनुनासिकलोपो भवति "अनुदात्तोपदेशवनतितनोत्यादीनाम्" इति॥

## हनः सिच्॥ १४॥

हन्तेर्धातोः परः सिच् किद्भवति। आहत। आहसाताम्। आहसत। सिचः कित्त्वादनुनासिकलोपः। सिज्ग्रहणं लिङ्निवृत्त्यर्थम्, उत्तरत्रानुवृत्तिर्मा भूत्। आत्मनेपदग्रहणमुत्तरार्थमनुवर्त्तते। इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात् कित्त्वस्य प्रयोजनं नास्ति॥

## यमो गन्धने॥ १५॥

सिच आत्मनेपदेष्विति वर्त्तते। यमेर्धातोर्गन्धने वर्त्तमानात्परः सिच् प्रत्ययः किद्भवति आत्मनेपदेषु परतः। गन्धनं सूचनम्, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद्धातूनां यमिस्तत्र वर्त्तते। उदायत। उदायसाताम्। उदायसत। सूचितवानित्यर्थः। सिचः कित्त्वादनुनासिकलोपः। "आङो यमहनः" इत्यात्मनेपदम्। गन्धन इति किम्?

---

लिङ्सिचा—इक्-समीपस्थ हल् से परवर्त्ती झलादि 'लिङ् एवं झलादि सिच् कित् होते हैं आत्मनेपद में।

उश्च—आत्मनेपद में ऋवर्णान्त धातु से परवर्त्ती झलादि लिङ्-सिच् कित् होते हैं।

वा गमः—'गम्' धातु से विहित झलादि लिङ्-सिच् आत्मनेपद में विकल्प से कित् होते हैं।

हनः सिच्—'हन्' धातु से विहित सिच् कित् होता है।

यमो गन्धने—दूसरों के द्वारा अपलाप्यमान दोष के उद्घाटन के अर्थ में प्रयुज्यमान, यम धातु से विहित सिच् आत्मनेपद में कित् होता है।

---

(१) इकस्समीपगतादिति न्यासे पाठः।

(२) ऋकारान्तादिति न्यासे पाठः।

(३) कुत्रचित्पाठः—आत्मनेपदेष्वित्येव। अकार्षीत् इति।

उदायस्त पादम्, उदायस्त कूपादुदकम्(१)। उद्धृतवानित्यर्थः। सकर्मकत्वेपि "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम्।

## विभाषोपयमने ॥ १६ ॥

यमः, सिजात्मनेपदेष्विति वर्त्तते। यमेर्धातोरुपयमने वर्त्तमानात् परः सिच्प्रत्ययो विभाषा किद्भवति आत्मनेपदेषु परतः। उपायत कन्याम्, उपायंस्त कन्याम्। उपायत भार्याम्, उपायंस्त भार्याम्। उपयमनं स्वीकरणं विवाहो दारकर्म पाणिग्रहणमित्यर्थः। "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्॥

## स्थाघ्वोरिच्च ॥ १७ ॥

सिजात्मनेपदेष्विति वर्तते। तिष्ठतेर्धातोः घुसंज्ञकानां च इकारश्चान्तादेशः सिच्च किद्भवति आत्मनेपदेषु परतः। उपास्थित। उपास्थिषाताम्। उपास्थिषत। घुसंज्ञकानाम्—अदित, अधित॥

इच्च कस्य तकारेत्वं दीर्घो मा भूदृतेऽपि सः। अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः॥

## न क्त्वा सेट् ॥ १८ ॥

क्त्वाप्रत्ययः सेण्न किद्भवति। देवित्वा। वर्त्तित्वा। सेडिति किम्? कृत्वा, हृत्वा। क्त्वाग्रहणं किम्? निगृहीतिः, उपस्निहितः, निकुचितिः॥

न सेडिति कृतेऽकित्वे निष्ठायामवधारणात्। ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः॥

इत्वं कित्संनियोगेन रेण तुल्यं सुधीवनि। वस्वर्थं किदतीदेशान्निगृहीतिः प्रयोजनम्॥

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥

न सेडिति वर्त्तते(२)। शीङ्, स्विदि, मिदि, क्ष्विदि, धृष् इत्येतेभ्यः परो निष्ठाप्रत्ययः सेण्न किद्भवति। शयितः। शयितवान्। प्रस्वेदितः। प्रस्वेदितवान्। प्रमेदितः। प्रमेदितवान्। प्रक्ष्वेदितः। प्रक्ष्वेदितवान्। प्रधर्षितः। प्रधर्षितवान्। सेडित्येव—स्विन्नः स्विन्नवान्। स्विदादीनाम् "आदितश्च" इति निष्ठायामिट् प्रतिषिध्यते। "विभाषा भावादिकर्मणोः" इति पक्षेऽभ्यनुज्ञायते। स विषयः कित्वप्रतिषेधस्य॥

## मृषस्तितिक्षायाम् ॥ २० ॥

मृषेर्धातोस्तितिक्षायामर्थे निष्ठा सेण्न किद्भवति। तितिक्षा क्षमा। मर्षितः। मर्षितवान्। तितिक्षायामिति किम्? अपमृषितं वाक्यमाह॥

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥

---

विभाषोप—विवाहार्थक 'यम' धातु से विहित सिच् आत्मनेपद में विकल्प से कित् होता है।

स्थाघ्वोरिच्च—स्था धातु तथा घुसंज्ञक धातुओं से विहित सिच् आत्मनेपद में कित् होता है और इन धातुओं के अन्त्य अल् के स्थान में इकारादेश भी।

न क्त्वा—इडागम-विशिष्ट क्त्वा प्रत्यय कित् नहीं होता है।

निष्ठा—'शीङ्', 'स्विदि', 'मिदि', 'क्ष्विदि' तथा 'धृष्' धातुओं से विहित इडागमविशिष्ट निष्ठाप्रत्यय ('क्त' तथा 'क्तवतु') कित् नहीं होता है।

मृषस्तितिक्षा—क्षमार्थक 'मृष्' धातु से विहित इडागम-विशिष्ट निष्ठा-प्रत्यय कित् नहीं होता है।

उदुप—ह्रस्व उकार है उपधा में जिस धातु का उससे भाव तथा आदिकर्म में विहित इडागम-विशिष्ट निष्ठा-प्रत्यय विकल्प से कित् नहीं होता है।

---

(१) रज्जुम् इति पाठः

(२) सेड् न किदिति पाठो बहुत्र वर्तते।

निष्ठा सेण्न किदिति वर्त्तते। उदुपधाद्धातोः परो भावे आदिकर्मणि च वर्त्तमानो निष्ठाप्रत्ययः सेडन्यतरस्यां न किद्भवति । द्युतितमनेन । द्योतितमनेन । प्रद्योतितः । प्रद्युतितः । मुदितमनेन । मोदितमनेन । प्रमुदितः । प्रमोदितः । उदुपधादिति किम् ? लिखितमनेन । भावादिकर्मणोरिति किम् ? रुचितं कार्षापणं ददाति । सेडित्येव—प्रभुक्त ओदनः । व्यवस्थितविभाषा चेयम् । तेन शब्विकरणानामेव भवति । 'गुध परिवेष्टने' गुधितमित्यत्र न भवति ॥

## पूङः क्त्वा च ॥ २२ ॥

अन्यतरस्यामिति न स्वर्यते, उत्तरसूत्रे पुनर्वावचनात् । न सेडिति वर्त्तते । "पूङश्च" इड्विहितः क्लिशः क्त्वानिष्ठयोः, पूङश्चेति । पूङः परो निष्ठाप्रत्ययः क्त्वा च सेण् न किद्भवति । पवितः । पवितवान् । क्त्वाप्रत्ययस्य "न क्त्वा सेट्" इति सिद्ध एव प्रतिषेधः । तस्य ग्रहणमुत्तरार्थम् । तथा चोक्तम्—'नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः, क्त्वाग्रहणमुत्तरार्थम्' इति ॥

## नोपधात् थफान्ताद् वा ॥ २३ ॥

निष्ठेति निवृत्तम् । नकारोपधाद्धातोस्थकारान्तात्फकारान्ताच्च परः क्त्वाप्रत्ययः सेड्वा न किद्भवति । ग्रथित्वा । ग्रन्थित्वा । श्रथित्वा । श्रन्थित्वा । गुफित्वा । गुम्फित्वा । नोपधादिति किम् ? रेफित्वा, गोफित्वा । थकान्तादिति किम् ? स्रंसित्वा, ध्वंसित्वा ॥

## वञ्चिलुञ्च्यृतश्च ॥ २४ ॥

वञ्चि, लुञ्चि, ऋत् इत्येतेभ्यः परः क्त्वाप्रत्ययः सेड्वा न किद्भवति । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा । अर्तित्वा । "ऋतेरीयङ्" आर्धधातुके विक-(१)ल्पितः । स यत्र पक्षे नास्ति तत्रेदमुदाहरणम् । सेडित्येव—वक्त्वा ॥

## तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥

न क्त्वा सेडिति प्रतिषेधे प्राप्ते कित्त्वं विकल्प्यते । तृषि, मृषि, कृशि इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्याचार्यस्य मते वा न किद्भवति । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । काश्यपग्रहणं पूजार्थम् । वेत्येव हि वर्त्तते ॥

## रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥

वेति वर्त्तते सेट्" इति च । उश्च इश्च वी । वी उपधे यस्य स व्युपधः । उकारोपधादिकारोपधाच्च धातोरलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः । द्युतित्वा ।

---

पूङः क्त्वा—'पूङ्' धातु से विहित इडागम-विशिष्ट क्त्वा-प्रत्यय तथा निष्ठा-प्रत्यय कित् नहीं होते हैं ।

नोपधात्—नकार हो उपधा में जिस धातु का, उससे और थकारान्त एवं फकारान्त धातुओं से विहित इडागम-विशिष्ट क्त्वा-प्रत्यय विकल्प से कित् नहीं होता है ।

वञ्चि—'वञ्चि', 'लुञ्चि' तथा ऋत् धातुओं से विहित इडागम-विशिष्ट क्त्वा-प्रत्यय विकल्प से कित् नहीं होता है ।

तृषिमृषि—'तृष्', 'मृष्' तथा 'कृश्' धातुओं से विहित इडागम-विशिष्ट क्त्वा-प्रत्यय काश्यपाचार्य के मत में विकल्प से कित् नहीं होता है ।

रलो—उकारोपध तथा इकारोपध हलादि धातुओं से विहित इडागम-विशिष्ट सन् तथा क्त्वा विकल्प से कित् होते हैं ।

---

(१) विकल्प्यत इति न्यासे पाठः ।

द्योतित्वा । (१)दिद्युतिषते । दिद्योतिषते । लिखित्वा । लेखित्वा । लिलिखिषति । लिलेखिषति । रल इति किम् ? देवित्वा । दिदेविषति । व्युपधादिति किम् ? वर्त्तित्वा । विवर्त्तिषते । हलादेरिति किम् ? एषित्वा । एषिषिषति । सेडित्येव—भुक्त्वा । बुभुक्षते ॥

## ऊकालोऽज् ह्रस्वदीर्घप्लुतः ॥ २७ ॥

ऊ इति त्रयाणामयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देशः । ह्रस्वदीर्घप्लुत इति द्वन्द्वैकवद्भावे पुँल्लिङ्गनिर्देशः । उऊउ३ इत्येवंकालोऽज् यथाक्रमं ह्रस्वदीर्घप्लुत इत्येवंसंज्ञो भवति । उकालो ह्रस्वः–दधि, मधु । ऊकालो दीर्घः–कुमारी, गौरी । उ३कालः प्लुतः—देवदत्त३ अत्र न्वसि । कालग्रहणं परिमाणार्थम् । दीर्घप्लुतयोः ह्रस्वसंज्ञा मा भूत्—आलूय । प्रलूय । "ह्रस्वस्य पिति कृति तुक्" इति तुग् न भवति । अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम्— प्रतक्ष्य । प्ररक्ष्य । ह्रस्वाश्रयस्तुङ् मा भूत्—तितउच्छत्रम् । "दीर्घात्" "पदान्ताद्वा" इति विभाषा तुङ् मा भूत् । ह्रस्वदीर्घप्लुतप्रदेशाः— "ह्रस्वो नपुंसके प्रातिपदिकस्य", "अकृत्सार्वधातुकयोर्दीर्घः", "वाक्यस्य टेः प्लुत उदात्तः" ॥

## अचश्च ॥ २८ ॥

परिभाषेयं स्थानिनियमार्था । ह्रस्वदीर्घप्लुताः स्वसंज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः । वक्ष्यति—"ह्रस्वो नपुंसके प्रातिपदिकस्य" । रै—अतिरि । नौ—अतिनु । गो–उपगु । अच इति किम् ? सुवाग्ब्राह्मणकुलम् । "अकृत्सार्वधातुकयोर्दीर्घः"—चीयते, श्रूयते । अच इति किम् ? भिद्यते, छिद्यते । "वाक्यस्य टेः प्लुत उदात्तः"—देवदत्त ३, यज्ञदत्त ३ । अच इति किम् ? अग्निचि ३ त् । सोमसु ३ त् । तकारस्य मा भूत् । स्वसंज्ञया विधाने नियमः । अजिति वर्त्तते । इह मा भूत्—द्यौः । पन्थाः । सः । द्युभ्याम् । द्युषु । अत्र नियमो नास्ति ॥

## उच्चैरुदात्तः ॥ २९ ॥

अजिति वर्त्तते । उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव । त इह तद्गुणेऽचि परिभाष्यन्ते । उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति । उच्चैरिति च श्रुतिप्रकर्षो न गृह्यते उच्चैर्भाषते, उच्चैः पठतीति । किं तर्हि ? स्थानकृतमुच्चत्वं संज्ञिनो विशेषणम् । ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते । तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवति, यस्मिन्नुच्चार्यमाणे गात्राणामायामो निग्रहो भवति । रूक्षता अस्निग्धता स्वरस्य । संवृतता कण्ठविवरस्य । ये । ते । के । उदात्तप्रदेशाः— "आद्युदात्तश्च" इत्येवमादयः ॥

## नीचैरनुदात्तः ॥ ३० ॥

अजिति वर्तते । नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो भवति । समाने स्थाने नीचभागे निष्पन्नोऽच् अनुदात्तः । यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो मार्दवम् भवति स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्योरुता महत्ता । त्व । सम । सिम । नेम । इत्य-

---

ऊकालोच्—उ, ऊ एवम् उ ३ इनमें से प्रत्येक के उच्चारण में जितना समय लगता है उतने समय में उच्चार्यमाण वर्ण की क्रमशः 'ह्रस्व', 'दीर्घ' तथा 'प्लुत' संज्ञाएँ हैं ।

अचश्च—'ह्रस्व', 'दीर्घ' तथा 'प्लुत' संज्ञाएँ स्वर की ही होती हैं ।

उच्चैः—उच्चारणस्थान के ऊर्ध्वभाग से उच्चार्यमाण स्वर की 'उदात्त' संज्ञा होती है ।

नीचैरनु—उच्चारण-स्थान के अधोभाग से उच्चार्यमाण स्वर की 'अनुदात्त' संज्ञा होती है ।

---

( १ ) विदिद्युतिषते, विदिद्योतिषते इति न्यासपाठः ।

तुचानि। नमस्ते रुद्र नीलकण्ठ सहस्राक्ष। अनुदात्तप्रदेशाः—"अनुदात्तौ सुप्पितौ" इत्येवमादयः॥

## समाहारः स्वरितः॥ ३१॥

अजिति वर्त्तते। उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरितसंज्ञो भवति। सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाचौ। तौ समाह्रियेते यस्मिन्नचि तस्य स्वरित इत्येषा संज्ञा विधीयते। शिक्यम्। कन्या। सामन्यः। क्व। स्वरितप्रदेशाः—"तित्स्वरितम्" इत्येवमादयः॥

## तस्यादित उदात्तमर्धह्रस्वम्॥ ३२॥

उदात्तानुदात्तस्वरसमाहारः स्वरित इत्युक्तम्। तत्र न ज्ञायते कस्मिन्नंशे उदात्तः कस्मिन्ननुदात्तः, कियान् वा उदात्तः, कियान् वा अनुदात्त इति? तदुभयमनेनाख्यायते। तस्य स्वरितस्य आदावर्धह्रस्वमुदात्तम्। परिशिष्टमनुदात्तम्। अर्धह्रस्वमिति चार्द्धमात्रोपलक्ष्यते। ह्रस्वग्रहणमतन्त्रम्। सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः। शिक्यमित्यत्रार्द्धमात्रादित उदात्ताऽपरार्धमात्राऽनुदात्ता, एकश्रुतिर्वा। कन्या इत्यत्रार्द्धमात्राऽऽदित उदात्तार्धमात्राऽनुदात्ता। माणवक ३ माणवकेत्यत्रार्धमात्राऽऽदित उदात्ताऽर्धतृतीयमात्रा अनुदात्ता॥

## एकश्रुति दूरात् सम्बुद्धौ॥ ३३॥

त्रैस्वर्ये पदानां प्राप्ते दूरात्संबुद्धावैकश्रुत्यं विधीयते। एका श्रुतिर्यस्य तदिदमेकश्रुति, एकश्रुति वाक्यं भवति। दूरात् संबोधयति येन वाक्येन तत्संबोधनं संबुद्धिः, नैकवचनं सम्बुद्धिः। स्वराणामुदात्तादीनामविभागो भेदतिरोधानमेकश्रुतिः। आगच्छ भो माणवक देवदत्त ३। दूरादिति किम्? आगच्छ भो माणवक देवदत्त॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु॥ ३४॥

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते, तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते। जपन्यूङ्खसामानि वर्ज्जयित्वा, यज्ञकर्मणि मन्त्राणामैकश्रुत्यं भवति। अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्। यज्ञकर्मणीति किम्? संपाठे माभूत्। अजपेष्विति किम्? ममाग्ने वर्चो विहवेष्वस्तु। जपोऽनु(१)करणमन्त्रः। उपांशुप्रयोगः। अन्यूङ्खेति किम्? न्यूङ्खा ओकाराः(२) षोडश। तेषु केचिदुदात्ताः। केचिदनुदात्ताः। असामस्विति किम्? ए३ विश्वं समत्रिणं(३) दहा३। सामानि वाक्यविशेषस्था गीतय उच्यन्ते। तत्रैकश्रुतिर्न भवति।

---

समाहारः—जिस स्वर में उदात्त तथा अनुदात्त स्वरों के धर्मों का समावेश हो उसे 'स्वरित' कहा जाता है।

तस्यादितः—स्वरित स्वर में प्रारम्भ की आधी मात्रा उदात्त होती है और शेषांश अनुदात्त।

एकश्रुति—दूर से सम्बोधन किया गया हो जिस वाक्य से उसमें सभी स्वरों की एकश्रुति (एक ही सा उच्चारण) होती है।

यज्ञकर्म—जप, न्यूङ्ख तथा साम के क्षेत्रों को छोड़कर अन्यत्र यज्ञकर्म में भी सभी स्वरों की एकश्रुति (एक ही सा उच्चारण) होती है।

---

(१) अकरणमन्त्र इति पाठान्तरम्।

(२) षडोङ्कारा इति पाठान्तरम्।

(३) दह इति ह्रस्वान्तम्, दहा इति दीर्घान्तञ्च पाठान्तरम्। न्यासे तु ह्रस्वान्तः पाठः।

## उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥

यज्ञकर्म्मणीति वर्तते। यज्ञकर्म्मणि वषट्कारः उच्चैस्तरां वा भवति एकश्रुतिर्वा। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते। वौषडित्यस्यैवेदं स्वरविधानम्। यद्येवं वौषड्ग्रहणमेव कस्मान्न कृतम्? वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः, पाणिनेः। सोमस्याग्ने वीही३ वौ३ पट्। सोमस्याग्ने वीही वौ३ पट्॥

## विभाषा छन्दसि ॥ ३६ ॥

छन्दसि विषये विभाषा एकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव भवति। वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्। तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति। इषे त्वोर्ज्जे त्वा। इषे त्वोर्ज्जे त्वा। अग्न आयाहि वीतये। अग्न आयाहि वीतये। अग्निमीळे पुरोहितम्। अग्निमीळे पुरोहितम्। शन्नो देवीरभिष्टये। शन्नो देवीरभिष्टये। (१)व्यवस्थितविकल्पोऽयमिति केचित्। व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यं ब्राह्मणदले नित्यमैकश्रुत्यमिति॥ "इच्छासंहितयोरपि छन्दो वेदे च छन्दसि" इति नानार्थकोशात् छन्दसि वर्णसंहितायामिति भट्टाचार्यचरणा इति भाषायामप्येकश्रुतिर्विभाषा भवतीति सिद्धम्॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्या नाम निगदस्तत्र "यज्ञकर्म्मणि" इति "विभाषा छन्दसि" इति च एकश्रुतिः प्राप्ता प्रतिषिध्यते। सुब्रह्मण्यायामेकश्रुतिर्न भवति। यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति। सुब्रह्मण्यो३ मिन्द्रागच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्। अत्र सुब्रह्मण्योमित्योकारस्तित्स्वरेण स्वरितस्तस्योदात्तो विधीयते। इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः। "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितः प्रसक्तस्तस्यानेन उदात्तः क्रियते। तेन द्वावप्युदात्तौ संपन्नौ। आगच्छेत्याकार उदात्तः। ततः परोऽनुदात्तः स्वरितस्तस्यानेनोदात्तः क्रियते। तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः। पश्चिम एकोऽनुदात्तः। हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ताः, द्वावनुदात्तौ। मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति "सुबामन्त्रिते पराङ्गवत्स्वरे" इति। ततः सकलस्यामन्त्रिताद्युदात्तत्वे कृते द्वितीयमक्षरमनुदात्तं तस्य "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितत्वे प्राप्ते इदमुदात्तत्वं विधीयते। तेन द्वावप्युदात्तौ भवतः। शेषमनुदात्तम्। वृषणश्वस्य मेन इति समानं पूर्वेण। गौरावस्कन्दिन्निति तथैव द्वे आद्ये अक्षरे उदात्ते शेषमनुदात्तम्। अहल्यायै जारेति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः। द्वावुदात्तौ शेषमनुदात्तम्। कौशिकब्राह्मणेति समस्तमामन्त्रितमाद्युदात्तं तत्र पूर्ववत् द्वावुदात्तौ। शेषमनुदात्तम्। एवं गौतमब्रुवाणेति द्वावुदात्तौ शेषमनुदात्तम्। श्वः सुत्यामागच्छ मघवन्निति श्वःशब्द उदात्तः, सुत्यामित्यन्तोदात्तः। "संज्ञायां समजनिपदः" इति क्यपो विधाने

---

उच्चैस्तराम्—यज्ञकर्म में 'वौषट्' विकल्प से उदात्ततर होता है और पक्षान्तर में एकश्रुति होती है।

विभाषा—वेद के विषय में विकल्प से तीनों स्वरों की एकश्रुति भी होती है और त्रैस्वर्य भी।

न सुब्र—'सुब्रह्मण्या' नामवाले निगद मे एकश्रुति तो नहीं होती परन्तु स्वरित के स्थान में उदात्त आदेश हो जाता है।

---

(१) व्यवस्थितेत्यारभ्य सिद्धमित्यन्तः पाठः क्वचिन्नोपलभ्यते। न्यासपदमञ्जर्योरपि न व्याख्यात एष पाठः।

उदात्त इति वर्त्तते। आगच्छेति द्वावुदात्तौ। अन्त्योऽनुदात्तः। मघवन्निति पदात्परमामन्त्रितं निहन्यते॥

## देवब्रह्मणोरनुदात्तः॥ ३८॥

सुब्रह्मण्यायामेव देवा ब्राह्मण इति पठ्यते। तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते। देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति। देवा ब्रह्माण आगच्छत। द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेपनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतस्तस्यानुदात्तो भवति॥

## स्वरितात् संहितायामनुदात्तानाम्॥ ३९॥

एकश्रुतिरिति वर्त्तते। संहितायां विषये स्वरितात्परेषामनुदात्तानामेकश्रुतिर्भवति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। माणवक जटिलकाध्यापक क्व गमिष्यसि। इममित्यन्तोदात्तम्, मे इति अनुदात्तम्, विधिकाल एव निघातविधानात्। तत्पुनः "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितं संपद्यते। तस्मात्स्वरितात्परेषामनुदात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति। सर्वे एते आमन्त्रितनिघातेनानुदात्ताः। माणवकजटिलकेतिप्रथममामन्त्रितमाद्युदात्तं तस्य द्वितीयमक्षरं स्वरितं ततः परेषामनुदात्तानामेकश्रुतिर्भवति। संहिताग्रहणं किम्? अवग्रहे मा भूत्—इमं मे गंगे यमुने सरस्वति॥

## उदात्तस्वरितपरस्य सन्नतरः॥ ४०॥

अनुदात्तग्रहणमनुवर्त्तते। उदात्तः परो यस्मात्स उदात्तपरः, स्वरितः परो यस्मात्स स्वरितपरः। उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति। अनुदात्ततर इत्यर्थः। देवा मरुतः पृश्निमातरोऽपः। मातर इत्यनुदात्तः। अप इत्यन्तोदात्तः "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" इति। तत्रानुदात्तयोरेकादेश ओकारोऽनुदात्तः। तस्योदात्ते परभूते सन्नतर आदेशो भवति। इमं मे गंगे यमुने सरस्वति शुतुद्रि। इकारोऽनुदात्तः। शुतुद्रि इत्येतदामन्त्रितं पादादौ, तस्मान्न निहन्यते "अनुदात्तं सर्वमपादादौ" इति। तस्य प्रथममक्षरमुदात्तम्, तस्मिन् परभूते पूर्वस्य सरस्वतीतीकारस्य सन्नतर आदेशो भवति। माणवक जटिलकाध्यापक? क्व गमिष्यसि। क्व इति स्वरितः, तस्मिन् परभूते क इति अनुदात्तस्य सन्नतर आदेशो भवति॥

## अपृक्त एकाल् प्रत्ययः॥ ४१॥

अपृक्त इतीयं संज्ञा भवति एकाल् यः प्रत्ययस्तस्य। असहायवाची एकशब्दः। "स्पृशोऽनुदके क्विन्"—घृतस्पृक्। "भजो ण्विः"-अर्धभाक्, पादभाक्। एकालिति किम्? दर्विः, जागृविः। प्रत्यय इति किम्? सुराः। अपृक्तप्रदेशाः—"वेरपृक्तस्य" इत्येवमादयः॥

## तत्पुरुषः समानाधिकरणः कर्मधारयः॥ ४२॥

तत्पुरुष इति समासविशेषस्य यस्य संज्ञां वक्ष्यति स तत्पुरुषः समानाधिकरणपदः

---

देवब्रह्मणोः—'सुब्रह्मण्या' निगद के अन्तर्गत आनेवाले 'देव' तथा 'ब्रह्मन्' शब्दों के स्वरित के स्थान में अनुदात्त हो जाता है।

स्वरितात—संहिता होने पर स्वरित के परवर्त्ती अनुदात्तों की एकश्रुति हो जाती है।

उदात्त—उदात्त से पूर्ववर्त्ती तथा स्वरित से पूर्ववर्त्ती अनुदात्त सन्नतर, अर्थात् अनुदात्त, हो जाता है।

अपृक्तः—एक अल् से निष्पन्न प्रत्यय की 'अपृक्त' संज्ञा होती है।

तत्पुरुषः—एक ही पदार्थ के अभिधायक शब्दों में होनेवाला तत्पुरुष समास 'कर्मधारय' कहलाता है।

कर्म्मधारयसंज्ञो भवति। अधिकरणशब्दोऽभिधेयवाची। समानाधिकरणः समानाभिधेयः। परमराज्यम्। उत्तमराज्यम्। कर्मधारये राज्यमित्युत्तरपदाद्युदात्तं न भवति। पाचकवृन्दारिका। तत्पुरुष इति किम्? पाचिकाभार्यः। समानाधिकरण इति किम्? ब्राह्मणराज्यम्। कर्म्मधारयप्रदेशाः—"कर्म्मधारये निष्ठा" इत्येवमादयः (१)॥

## प्रथमानिर्दिष्टं समास उपसर्ज्जनम्॥ ४३॥

प्रथमया विभक्त्या यन्निर्दिश्यते समासशास्त्रे तदुपसर्ज्जनसंज्ञं भवति। समास इति समास(२)विधायि शास्त्रं गृह्यते। वक्ष्यति—"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति द्वितीयासमासे द्वितीयेत्येतत् प्रथमानिर्दिष्टम्, तृतीयासमासे तृतीयेति, चतुर्थीसमासे चतुर्थीति, पञ्चमीसमासे पञ्चमीति, षष्ठीसमासे षष्ठीति, सप्तमीसमासे सप्तमीति। कष्टश्रितः। शङ्कुलाखण्डः। यूपदारु। वृकभयम्। राजपुरुषः। अक्षशौण्डः। उपसर्जनप्रदेशाः—"उपसर्ज्जनं पूर्वम्" इत्येवमादयः॥

## एकविभक्ति चापूर्वनिपाते॥ ४४॥

एका विभक्तिर्यस्य तदिदमेकविभक्ति। समासे विधीयमाने यन्नियतविभक्तिकं द्वितीये संबन्धिनि वहुभिर्विभक्तिभिर्युज्यमानेऽप्येकयैव विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवति, अपूर्वनिपाते। पूर्वनिपातं पूर्वनिपाताख्यमुपसर्जनकार्यं वर्ज्जयित्वा। निरादयः क्रान्ताद्यर्थे पञ्चम्या। पूर्वपदे नानाविभक्तिकेऽप्युत्तरपदं पञ्चम्यन्तमेव भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्क्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। निर्वाराणसिः। एकविभक्तीति किम्? राजकुमारी। अपूर्वनिपात इति किम्? न हि भवति कौशाम्बीनिरिति॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥ ४५॥

अभिधेयवचनोऽर्थशब्दः(३)। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्ज्जयित्वा। डित्थः। कपित्थः। कुण्डम्। पीठम्। अर्थवदिति किम्? वनं धनमिति। नन्तस्यावधेर्मा भूत्। न लोपो हि स्यात्। अधातुरिति किम्? हन्तेर्लङ्—अहन्। नलोपः स्यात्। अप्रत्यय इति किम्? काण्डे, कुड्ये। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः स्यात्। (४)अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते—अध्यागच्छति,

---

प्रथमा—समासविधायक सूत्रों में प्रथमा विभक्ति के द्वारा निर्दिश्यमान पद 'उपसर्जन' संज्ञक है।

एकविभक्ति—विग्रहस्थिति में अन्य सम्बन्धी के विभिन्न विभक्त्यन्त होने पर भी एक ही विभक्ति से सम्पन्न पद 'उपसर्जन' कहलाता है, पूर्वनिपात स्वरूप कार्य को छोड़कर।

अर्थवत्—धातु तथा प्रत्यय को छोड़कर अन्य अर्थवान् शब्दों की 'प्रातिपदिक' संज्ञा होती है।

---

(१) कर्मधारयप्रदेशाः पुंवत्कर्मधारयजातीयदेशीयेष्वित्येवमादयः इति क्वचिदुपलभ्यते।

(२) न्यासे विधायि इति पदं नास्ति, समासशास्त्रम् इत्येव तत्र पाठः।

(३) अर्थशब्दो हि अभिधेय-प्रयोजन-निवृत्ति-धनवचनः, तत्र न प्रयोजनवचनोऽव्यभिचारात्। न निवृत्तिवचनः स्वयं निवृत्तस्य किं संज्ञया। न धनवचनः स्वस्वामिभावस्यासंभवात्। तस्मात् परिशेषादभिधेयवचन इत्याह-अभिधेयवचनोऽर्थशब्द इति।

(४) अनर्थकस्येत्यादिः प्रलम्बते-इत्यन्तः पाठः क्वचिन्नास्ति। न्यासपदमंजर्योरपि एष पाठो न व्याख्यातः।

पर्याप्त्यर्थग्रहणम्—प्रभुर्मल्लो मल्लाय, शक्तो मल्लो मल्लाय। वषडग्नये। वषडिन्द्राय। चकारः पुनरस्यैव समुच्चयार्थः, तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति—स्वस्ति गोभ्यो भूयात्, स्वस्ति ब्राह्मणेभ्यः॥

## मन्यकर्मण्यनादरे विभाषाऽप्राणिषु॥ १७॥

मन्यतेः कर्मणि, मन्यकर्मणि। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने। अनादरस्तिरस्कारः। न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये। मन्यतिग्रहणं किम्? न त्वा तृणं चिन्तयामि। विकरणनिर्देशः किमर्थः? न त्वा तृणं मन्वे। अनादर इति किम्?—

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम्।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति॥

अप्राणिष्विति किम्? न त्वा शृगालं मन्ये॥ ॐयदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम्ॐ। व्यवस्थितविभाषा च ज्ञेया। (१)न त्वा नावं मन्ये यावत्तीर्णं न नाव्यम्। न त्वाऽन्नं मन्ये यावन्न भुक्तं श्राद्धम्। प्राणिषु तूभयम्। न त्वा काकं मन्ये। न त्वा शृगालं मन्ये। इह चतुर्थी द्वितीया च भवतः—न त्वा श्वानं मन्ये। न त्वा शुने मन्ये। युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म? व्यवस्थितविभाषाविज्ञानादेव न भवति॥

## कर्तृकरणयोस्तृतीया॥ १८॥

कर्त्तरि करणे च कारके तृतीया विभक्तिर्भवति। देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्। करणे-दात्रेण लुनाति, परशुना छिनत्ति॥ ॐतृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम्ॐ। प्रकृत्याऽभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। प्रायेण वैयाकरणः। गार्ग्योऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति। सहस्रेण (२)पशून् क्रीणाति॥

## सहयुक्तेऽप्रधाने॥ १९॥

सहार्थेन युक्तेऽप्रधाने तृतीया विभक्तिर्भवति। पुत्रेण सहागतः पिता। (३)पुत्रेण सह स्थूलः। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसम्बन्धः शब्देनोच्यते, पुत्रस्य तु

---

मन्यकर्मण्यनादरे—अनादर के प्रतीयमान होने पर 'मन्' धातु के प्राणिभिन्न कर्म से विकल्प से चतुर्थी विभक्ति होती है।

यदेतदप्राणि—उपर्युक्त सूत्र में जो 'मन्' धातु के प्राणिभिन्न कर्म का उल्लेख किया गया है उसमें नाव आदि से भिन्न की भी विवक्षा समझनी चाहिए।

कर्तृकरणयोः—कर्त्ता तथा करण से तृतीया विभक्ति होती है।

तृतीयाविधाने—तृतीया-विधि में प्रकृति आदि शब्दों का भी उल्लेख समझना चाहिए।

सहयुक्ते—सहार्थक के साथ युक्त अप्रधान से तृतीया विभक्ति होती है।

---

(१) न त्वा नावं मन्ये यावत्तीर्णं न नाव्यमिति। यावत्—यतो नाव्यं नावा स्वल्पनौकया तार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः। नौशब्देनोडुपं स्वल्पनौकोच्यते। त्वा शब्दार्थस्तु महती नौः। एवं ह्यनादरो भवतीत्याहुः। एवं न त्वाऽन्नं मन्ये यावद्भुक्तं न श्राद्धमित्यस्य यत् श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामश्यरूपमन्नमोदनमपि न मन्ये इत्यर्थः इति उद्योते स्पष्टम्।

(२) अश्वानिति न्यासे।

(३) यद्यप्येतदुदाहरणं मुद्रितपुस्तकेषु न दृश्यते तथापि न्यासपदमंजरीस्वारस्यादुपन्यस्तम्।

प्रतीयमान इति तस्याप्राधान्यम् । सहार्थेन च योगे विधानात्पर्यायप्रयोगेऽपि भवति— पुत्रेण सार्द्धमिति । विनापि सहशब्देन भवति, "वृद्धो यूना" इति निदर्शनात् । अप्रधान इति किम् ? शिष्येण सहोपाध्यायस्य गौः ॥

## येनाङ्गविकारः ॥ २० ॥

अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्त्तते, येनेति च तदवयवो हेतुत्वेन निर्दिश्यते । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुण्ठः(१) । अवयवधर्मेण समुदायो व्यपदिश्यते । (२)अङ्गविकार इति किम् ? अक्षि काणमस्य ॥

## इत्थंभूतलक्षणे ॥ २१ ॥

(३)कंचित्प्रकारं प्राप्त(४) इत्थंभूतः, तस्य लक्षणमित्थंभूतलक्षणम्, ततस्तृतीया विभक्तिर्भवति । अपि भवान् कमण्डलुना छात्रमद्राक्षीत् । छात्रेणोपाध्यायम् । शिखया परिव्राजकम् । इह न भवति—कमण्डलुपाणिश्छात्र इति, लक्षणस्य समासेऽन्तर्भूतत्वात् । इत्थंभूत इति किम् ? वृक्षं प्रति विद्योतनम्(५) ॥

## संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥

सम्पूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति । पित्रा संजानीते । पितरं संजानीते । मात्रा संजानीते । मातरं संजानीते(६) ॥

## हेतौ ॥ २३ ॥

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते । तद्वाचिनस्तृतीया विभक्तिर्भवति । धनेन कुलम् । कन्यया शोकः । विद्यया यशः ॥

## अकर्तर्यृणे पञ्चमी ॥ २४ ॥

हेताविति वर्त्तते । कर्त्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति । तृतीयापवादो योगः । शतात् बद्धः । सहस्राद् बद्धः । अकर्त्तरीति किम् ? शतेन बन्धितः । शतमृणं च भवति, प्रयोजकत्वाच्च कर्त्तृसंज्ञम् ॥

---

येनाङ्ग—जिस विकृत अङ्ग से अङ्गी का विकार लक्षित हो उससे तृतीया विभक्ति होती है ।

इत्थम्भूत—इत्थम्भूत के लक्षण से तृतीया होती है ।

संज्ञोऽन्य—सम्-पूर्वक ज्ञा धातु के कर्मकारक से द्वितीया के स्थान में विकल्प से तृतीया विभक्ति होती है ।

हेतौ—हेतुवाचक से तृतीया होती है ।

अकर्तर्यृणे—कर्त्तृभिन्न ऋण-वाचक शब्द से पञ्चमी होती है ।

---

(१) कुणिरिति पाठः क्वचित् ।

(२) क्वचिदङ्ग इति किमिति पाठः ।

(३) सामान्यस्य भेदको विशेषः प्रकार उच्यते ।

(४) अत्र आपन्न इति न्यासे पाठः ।

(५) इत्थंभूत इत्यादितः विद्योतनमित्यन्तः पाठः प्रायो न दृश्यते ।

(६) क्वचिदधिकः पाठोऽत्र—संपूर्वः किम् ? मातरं जानाति । कर्मणीति किम् ? पूरेण पुत्रं संजानीते इति ।

## विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥

हेताविति वर्त्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति। जाड्यात् बद्धः। जाड्येन बद्धः। पाण्डित्यान् मुक्तः। पाण्डित्येन मुक्तः। गुणग्रहणं किम्? धनेन कुलम्। अस्त्रियामिति किम्? बुद्ध्या मुक्तः, प्रज्ञया मुक्तः॥

## षष्ठी हेतुप्रयोगे ॥ २६ ॥

हेतोः प्रयोगो हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति॥

## सर्वनाम्नस्तृतीया च ॥ २७ ॥

सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च। पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते। कस्य हेतोर्वसति। केन हेतुना वसति। यस्य हेतोर्वसति। येन हेतुना वसति। *निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्*। किं निमित्तं वसति। केन निमित्तेन वसति। कस्मै निमित्ताय वसति। कस्मान्निमित्ताद्वसति। कस्य निमित्तस्य वसति। कस्मिन्निमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्। अर्थग्रहणं चैतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति। तेनेहापि भवति—किं प्रयोजनं वसति। केन प्रयोजनेन वसति। कस्मै प्रयोजनाय वसति। कस्मात्प्रयोजनाद् वसति। कस्य प्रयोजनस्य वसति। कस्मिन् प्रयोजने वसति॥

## अपादाने पञ्चमी ॥ २८ ॥

अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात्पराजयते। *पञ्चमीविधाने ल्यब्लोपे कर्म्मण्युपसंख्यानम्*। प्रासादात् प्रेक्षते, आसनात् प्रेक्षते, शयनात् प्रेक्षते। *अधिकरणे चोपसंख्यानम्*। आसने उपविश्य प्रेक्षते आसनात् प्रेक्षते, शयनात् प्रेक्षते। *प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या*। कुतो भवान्? पाटलिपुत्रात्। *यतश्चाध्वकालनिर्माणं(१) तत्र पञ्चमी वक्तव्या*। गवीधुमतः साङ्काश्यं चत्वारि योजनानि। कार्त्तिक्या आग्रहायणी मासे। *तद्युक्तात्काले

---

विभाषा—गुणस्वरूप स्त्रीलिङ्गभिन्न हेतुवाचक शब्द से विकल्प से पञ्चमी विभक्ति होती है।

षष्ठी हेतु—हेतु शब्द के प्रयोग के द्वारा हेतु के द्योत्य होने पर षष्ठी विभक्ति होती है।

सर्वनाम्नः—हेतुशब्द के प्रयोग के द्वारा हेतु के द्योत्य होने पर सर्वनाम शब्दों से तृतीया तथा षष्ठी विभक्तियाँ होती हैं।

निमित्त—निमित्तार्थक शब्दों के प्रयोग में प्रायशः सभी विभक्तियाँ देखी जाती हैं।

अपादाने—अपादान कारक से पञ्चमी विभक्ति होती है।

पञ्चमी—पञ्चमी-विधि में ल्यबन्त के लोप होने पर उसके कर्मकारक से भी पञ्चमी का विधान समझना चाहिए।

अधिकरणे—ल्यबन्त के लोप होने पर उसके अधिकरण कारक से भी पञ्चमी विभक्ति समझनी चाहिए।

प्रश्नाख्यान—प्रश्न और उसके उत्तर में पञ्चमी विभक्ति होती है।

यतश्चाध्व—जिस स्थान से अध्व ( मार्ग ) तथा काल का अवधि-निर्णय किया जाय उससे पञ्चमी होती है।

तद्युक्तात्—पञ्चमी-युक्त से परवर्त्ती कालवाचक मासादि शब्दों से सप्तमी विभक्ति समझनी चाहिए।

---

( १ ) निर्माणम्=इयत्तापरिच्छेदः।

सप्तमी वक्तव्या॥। कार्त्तिक्या आग्रहायणी मासे। ॥अध्वनः प्रथमा सप्तमी च वक्तव्या॥। गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा॥

## अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥

अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्त्तते। तत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" इति प्राप्ते पञ्चमी विधीयते। आराद्देवदत्तात्। आराद्यज्ञदत्तात्। इतर इति निर्दिश्यमानप्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्। ऋते इति अव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्। दिक्शब्द–पूर्वो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। दिक्शब्द इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात्, इतरथा हि दिग्वृत्तिनैव स्यात्—इयमस्याः पूर्वेति। इह तु न स्यात्—अयमस्मात् पूर्वः काल इति। अञ्चूत्तरपद–प्राग् ग्रामात्। प्रत्यग् ग्रामात्। ननु चायमपि दिक्शब्द एव? "षष्ठ्यतसर्थप्रत्ययेन" इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः। आच्–दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि–दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्॥

## षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥

"दक्षिणोत्तराभ्यामतसुच्" इति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरो ग्रामस्य। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद्ग्रामस्य॥

## एनपा द्वितीया ॥ ३१ ॥

"एनबन्यतरस्यामदूरे पञ्चम्याः" इति वक्ष्यति। तेन युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यपीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः॥

## पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ ३२ ॥

पञ्चमीग्रहणमनुवर्त्तते। पृथक्, विना, नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति अन्यतरस्यां पञ्चमी च। पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्। पृथग् विनानानाभिरिति योगविभागो द्वितीयार्थः॥

> विना वातं विना वर्षं विद्युत्प्रपतनं विना।
> विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ॥

---

अध्वनः—पञ्चमी-युक्त पदार्थ से परवर्त्ती अध्ववाचक शब्दों से प्रथमा तथा सप्तमी विभक्तियाँ समझनी चाहिए।

अन्यारादितरर्त्ते—अन्यार्थक, आरात्, इतर, ऋते, दिग्वाचक शब्द, अञ्चूत्तर पद, आच् तथा आहि के योग में पञ्चमी विभक्ति होती है।

षष्ठ्यतसर्थ—अतसुच् तथा इसके अर्थ में विहित प्रत्ययों से युक्त शब्द से युक्त से षष्ठी विभक्ति होती हैं।

एनपा—एनप्प्रत्यान्त से युक्त शब्द से द्वितीया होती है।

पृथग्विना—पृथक्, विना तथा नाना—इन शब्दों के योग में तृतीया तथा पञ्चमी विभक्तियाँ होती हैं।

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥

स्तोक, अल्प, कृच्छ्र, कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिद्धा। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता। स्तोकान्मुक्तः। स्तोकेन मुक्तः। अल्पान्मुक्तः। अल्पेन मुक्तः। कृच्छ्रान्मुक्तः। कृच्छ्रेण मुक्तः। कतिपयान्मुक्तः। कतिपयेन मुक्तः। असत्त्ववचनस्येति किम्? स्तोकेन विषेण हतः, अल्पेन मधुना मत्तः। करण इति किम्? क्रियाविशेषणे कर्मणि मा भूत्—स्तोकं मुञ्चति॥

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३४ ॥

पञ्चम्यनुवर्त्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्तरस्यां पञ्चमी च। दूरं ग्रामात्। दूरं ग्रामस्य। विप्रकृष्टं ग्रामात्। विप्रकृष्टं ग्रामस्य। अन्तिकं ग्रामात्। अन्तिकं ग्रामस्य। अभ्याशं ग्रामात्। अभ्याशं ग्रामस्य। अन्यतरस्यांग्रहणं पञ्चम्यर्थम्। इतरथा हि तृतीया पक्षे स्यात्॥

## दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥

पञ्चम्यनुवर्त्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीयापि समुच्चीयते। दूरं ग्रामस्य। दूराद् ग्रामस्य। दूरेण ग्रामस्य। अन्तिकं ग्रामस्य। अन्तिकाद् ग्रामस्य। अन्तिकेन ग्रामस्य। प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं चानुवर्त्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति। दूरः पन्थाः। दूराय पथे देहि। दूरस्य पथः स्वम्॥

## सप्तम्यधिकरणे च ॥ ३६ ॥

सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि। दूरे ग्रामस्य। अन्तिके ग्रामस्य। अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति द्वितीयातृतीयापञ्चमीसप्तम्यः। ॐसप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्ॐ। अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि। ॐसाध्वसाधुप्रयोगे च सप्तमी वक्तव्याॐ। साधुर्देवदत्तो मातरि। असाधुः पितरि। ॐकारकार्हाणां च कारकत्वे सप्तमी

---

करणे च—असत्त्ववाची स्तोक, अल्प, कृच्छ्र तथा कतिपय शब्दों से करण में तृतीया तथा पञ्चमी विभक्तियाँ होती हैं।

दूरान्तिकार्थैः—दूरार्थक तथा अन्तिकार्थक (समीपार्थक) शब्दों के योग में षष्ठी तथा पञ्चमी विभक्तियाँ होती हैं।

दूरान्तिकार्थेभ्यो—दूरार्थक तथा अन्तिकार्थक शब्दों से द्वितीया, तृतीया तथा पञ्चमी विभक्तियाँ होती हैं।

सप्तम्यधि—अधिकरण कारक से तथा दूरार्थक और अन्तिकार्थक शब्दों से सप्तमी विभक्ति होती है।

सप्तमी—सप्तमी-विधि के प्रसङ्ग में इन्-विषयक क्त-प्रत्ययान्त के कर्मकारक से भी सप्तमी समझनी चाहिए।

साध्वसाधु—साधु तथा असाधु शब्दों के प्रयोग होने पर भी सप्तमी विभक्ति का विधान समझना चाहिए।

कारकार्हाणाम्—क्रिया के प्रति जिसका कारकत्व उचित हो उसके कारकत्व की विवक्षा होने पर उससे सप्तमी विभक्ति होती है।

वक्तव्या॥। ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते। ॥अकारकार्हाणां च अकारकत्वे सप्तमी वक्तव्या॥। दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति। ॥तद्विपर्यासे च सप्तमी वक्तव्या॥। ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति। ॥निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या॥।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु(१)चमरीं हन्ति सीम्नि पुष्कलको हतः॥

## यस्य च भावेन भावलक्षणम् ॥ ३७ ॥

सप्तमीति वर्त्तते। भावः क्रिया। यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी विभक्तिर्भवति। प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः। भावेनेति किम्? यो जटाभिः स भुङ्क्ते। पुनर्भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः॥

## षष्ठी चानादरे ॥ ३८ ॥

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सापि भवति। अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्। रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्। क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥

षष्ठीसप्तम्यौ वर्तेते। स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः। गवां स्वामी। गोषु स्वामी। गवामीश्वरः। गोष्वीश्वरः। गवामधिपतिः। गोष्वधिपतिः। गवां दायादः। गोषु दायादः। गवां साक्षी। गोषु साक्षी। गवां प्रतिभूः। गोषु प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम्॥

## आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥

षष्ठीसप्तम्यौ वर्तेते। आयुक्तो व्यापारितः(२), कुशलो निपुणः, ताभ्यां योगे आसे-

---

अकारकार्हाणाम्—अकारकत्वार्ह के अकारकत्व की विवक्षा में भी सप्तमी समझनी चाहिए।

तद्विपर्यासे—उपर्युक्त स्थितियों के विपर्यय—कारकत्वार्ह के कारकत्व की अविवक्षा और अकारकत्वार्ह की कारकत्व-विवक्षा—में भी सप्तमी विभक्ति समझनी चाहिए।

निमित्तात्—कर्मकारक के प्रयुज्यमान होने पर निमित्त-भूत-पदार्थवाचक शब्दों से सप्तमी विभक्ति समझनी चाहिए।

यस्य च—जिसकी एक क्रिया से दूसरी क्रिया लक्षित हो उस क्रियावान् से सप्तमी होती है।

षष्ठी—परन्तु अनादर की प्रतीति होने पर जिसकी एक क्रिया से दूसरी क्रिया लक्षित होती हो उस क्रियावान् से षष्ठी और सप्तमी भी विकल्प से होती हैं।

स्वामीश्वराधि—स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत—इन शब्दों के योग में षष्ठी तथा सप्तमी विभक्तियाँ विकल्प से होती हैं।

आयुक्त—तात्पर्य के गम्यमान होने पर आयुक्त (=नियुक्त) तथा कुशल शब्दों के योग में षष्ठी तथा सप्तमी विभक्तियाँ विकल्प से होती हैं।

---

(१) बालेषु इति पाठः।
(२) व्यापृत इति प्रायः पाठः।

वायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा तात्पर्यम्। आयुक्तः कटकरणस्य। आयुक्तः कटकरणे। कुशलः कटकरणस्य। कुशलः कटकरणे। (१)आसेवायामिति किम्? आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः। तत्र सप्तम्येवाधिकरणे भवति॥

## यतश्च निर्द्धारणम्॥ ४१॥

षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः। मनुष्याणां क्षत्रियः शूरतमः। मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा। गोषु कृष्णा सम्पन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः। अध्वगेषु धावन्तः शीघ्रतमाः॥

## पञ्चमी विभक्ते॥ ४२॥

"यतश्च निर्धारणम्"इति वर्तते। षष्ठीसप्तम्यपवादो योगः। विभागो विभक्तम्। यस्मिन्निर्द्धारणाश्रये विभक्तमस्यास्ति ततः पंचमी विभक्तिर्भवति। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः, आढ्यतराः॥

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः॥ ४३॥

साधु, निपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रतिः प्रयुज्यते। मातरि साधुः। पितरि साधुः। मातरि निपुणः। पितरि निपुणः। अर्चायामिति किम्? साधुर्भृत्यो राज्ञः। तत्त्वकथने न भवति। अप्रतेरिति किम्? साधुर्देवदत्तो मातरं प्रति। ॐअप्रत्यादिभिरिति वक्तव्यम्ॐ। साधुर्देवदत्तो मातरं परि, मातरमनु॥

## प्रसितोत्सुकाभ्यां तृतीया च॥ ४४॥

प्रसित, उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च। प्रसितः प्रसक्तः, यस्तत्र नियमेनाववद्धः स(२) उच्यते। केशैः प्रसितः। केशेषु प्रसितः। केशैरुत्सुकः। केशेषूत्सुकः॥

## नक्षत्रे च लुपि॥ ४५॥

तृतीयासप्तम्यावनुवर्तते। लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण पायसमश्नीयात्। पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्। मघासु पललौदनम्। नक्षत्र इति किम्? पञ्चालेषु वसति। लुपीति किम्? मघासु ग्रहः। इह कस्मान्न

---

यतश्च—जहाँ से निर्धारण हो उससे सप्तमी तथा षष्ठी विभक्तियाँ विकल्प से होती हैं।

पञ्चमी—जिस निर्धारणाश्रय में विभाग हो उससे पञ्चमी विभक्ति होती है।

साधु—अर्चा (पूजा) के गम्यमान होने पर साधु तथा निपुण शब्दों के योग में सप्तमी विभक्ति होती है यदि 'प्रति' का प्रयोग न हुआ हो।

अप्रत्यादि—'प्रति' के प्रयोग न होने का अर्थ 'प्रति' आदि का प्रयोग न होना समझना चाहिए।

प्रसितोत्सुकाभ्याम्—प्रसित तथा उत्सुक शब्दों के योग में तृतीया तथा सप्तमी विभक्तियाँ होती हैं विकल्प से।

नक्षत्रे च—लुबन्त नक्षत्रवाचक शब्दों से तृतीया तथा सप्तमी विभक्तियाँ विकल्प से होती हैं।

---

(१) आसेवायामित्यारभ्य इत्यर्थ इत्यन्तः पाठो न्यासपर्य्यालोचनया मूले नासीदिति प्रतीयते। पदमञ्जर्यादर्शपुस्तके प्रत्युदाहरणमासीत्तदर्थश्च नासीदिति प्रतीयते।

(२) प्रसितशब्देनोच्यते इति न्यासपाठः।

भवति—अद्य पुष्यः, अद्य कृत्तिका ? अधिकरण इति वर्त्तते, वचनं तु पक्षे तृतीयाविधानार्थम् ॥

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥

प्रातिपदिकार्थः सत्ता । लिङ्गम्—स्त्रीलिङ्गपुँल्लिङ्गनपुंसकानि । परिमाणं द्रोणः, खारी, आढकम् । वचनम्—एकत्वद्वित्वबहुत्वानि । मात्रशब्दः प्रत्येकमभिसंबध्यते । प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमा विभक्तिर्भवति । प्रातिपदिकार्थमात्रे—उच्चैः, नीचैः । लिङ्गग्रहणं किम् ? कुमारी, वृक्षः, कुण्डम् इत्यत्रापि यथा स्यात् । परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकम् इत्यत्रापि यथा स्यात् । वचनग्रहणं किम् ? एकत्वादिषूक्तेष्वपि यथा स्याद्—एकः, द्वौ, बहवः । प्रातिपदिकग्रहणं किम् ? निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तम्, ततोऽपि यथा स्यात्—प्रलम्बते, अध्यागच्छति ॥

## संबोधने च ॥ ४७ ॥

आभिमुख्यकरणं सम्बोधनम् , तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारभ्यते । सम्बोधने च प्रथमा विभक्तिर्भवति । हे देवदत्त । हे देवदत्तौ । हे देवदत्ताः ॥

## साऽऽमन्त्रितम् ॥ ४८ ॥

सम्बोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति । तथा चैवोदाहृतम् । आमन्त्रितप्रदेशाः—"आमन्त्रितं पूर्वमविद्यमानवत्" इत्येवमादयः(१) ॥

## एकवचनं संबुद्धिः ॥ ४९ ॥

आमन्त्रितप्रथमाया यदेकवचनं तत्सम्बुद्धिसंज्ञं भवति । हे पटो । हे देवदत्त । सम्बुद्धिप्रदेशाः—"एङ्ह्रस्वात् सम्बुद्धेः" इत्येवमादयः ॥

## षष्ठी शेषे ॥ ५० ॥

(२) कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः, तत्र षष्ठी विभक्तिर्भवति । राज्ञः पुरुषः । पशोः पादः । पितुः पुत्रः ॥

---

प्रातिपदिकार्थ—प्रातिपदिकार्थमात्र में, लिङ्गमात्र में, परिमाणमात्र में तथा वचनमात्र में प्रथमा विभक्ति होती है ।

सम्बोधने—सम्बोधन में भी प्रथमा विभक्ति होती है ।

साऽऽमन्त्रितम्—सम्बोधनविहितप्रथमान्त शब्दस्वरूप की 'आमन्त्रित' संज्ञा होती है ।

एकवचनम्—आमन्त्रितसंज्ञक प्रथमा के एकवचन की 'सम्बुद्धि' संज्ञा होती है ।

षष्ठी—कर्मादिभिन्न तथा प्रातिपदिकार्थभिन्न स्वस्वामिभावादिसम्बन्धस्वरूप शेष में षष्ठी होती है ।

---

(१) क्वचित् आमन्त्रितस्य च इत्येवमादयः इति पाठः ।

(२) अत्र न्यासे कर्मादिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरेकः स्वस्वामिकसम्बन्धादिः स शेषः इति पाठो दृश्यते । कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायत इत्याह कर्मादिभ्यो योऽन्य इति । कर्मादयः कारकविशेषाः, तस्य सम्बन्धस्य हेतुभूताः । स तु फलभूतः । हेतुफलयोगश्च प्रसिद्धमन्यत्वमिति तेभ्योऽन्यो भवति । प्रातिपदिकार्थव्यतिरेक इति । व्यतिरेक आधिक्यम् । अथवा येन प्रातिपदिकार्थो व्यतिरिच्यते व्यतिरेकीक्रियते स व्यतिरेकः । प्रातिपदिकार्थस्य व्यतिरेकः प्रातिपदिकार्थव्यतिरेकः, स शेषः ।

## ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥

(१)जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। (२) सर्पिषा करणेन प्रवर्तत इत्यर्थः। प्रवृत्तिवचनो जानातिरविदर्थः। अथवा मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानमज्ञानमेव। अविदर्थस्येति किम्? स्वरेण पुत्रं जानाति॥

## अधीगर्थदयेशां कर्मणि ॥ ५२ ॥

शेष इति वर्तते। अधीगर्थाः स्मरणार्थाः। 'दय दानगतिरक्षणेषु', 'ईश ऐश्वर्ये' एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे। कर्मणीति किम्? मातुर्गुणैः स्मरति। शेषे इति किम्? मातरं स्मरति॥

## कृञः प्रतियत्ने ॥ ५३ ॥

सतो गुणान्तराधानं प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विविक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधो दकस्योपस्कुरुते। शस्त्रपत्रस्योपस्कुरुते। प्रतियत्न इति किम्? कटं करोति। कर्मणीति किम्? एधो दकस्योपस्कुरुते प्रज्ञया। शेष इत्येव—एधो दकमुपस्कुरुते॥

## रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः। रुजार्थानामिति किम्?

एति जीवन्तमानन्दो नरं वर्षशतादपि।
जीव पुत्रक मा मैवं तपः साहसमाचरः॥(३)

भाववचनानामिति। किम्? नदी कुलानि रुजति। अज्वरेरिति किम्? चौरं ज्वरयति ज्वरः। ॐअज्वरिसंताप्योरिति वक्तव्यम्ॐ। चौरं संतापयति तापः। शेष इत्येव—चौरं रुजति रोगः॥

---

ज्ञोऽविदर्थस्य—अज्ञानार्थक 'ज्ञा' धातु के करण कारक से षष्ठी होती है।

अधीगर्थ—स्मरणार्थक धातु, 'दय' धातु तथा 'ईश' धातु के कर्मकारक की यदि शेषत्वेन विवक्षा हो तो उससे भी षष्ठी विभक्ति होती है।

कृञः—गुणाधान के प्रतीत होने पर 'कृञ्' धातु के शेष के रूप में विवक्षित कर्म कारक से षष्ठी होती है।

रुजार्थानाम्—भाववाचक घञादिप्रत्ययान्त शब्द हों कर्त्ता जिनके ऐसे 'ज्वर'-धातुभिन्न रोगार्थक धातुओं के कर्म कारक से, शेषत्व की विवक्षा में, षष्ठी विभक्ति होती है।

अज्वरि—केवल 'ज्वर' धातु से ही नहीं किन्तु उसके साथ-साथ सम्पूर्वक 'तप्' धातु का भी प्रतिषेध में परिगणन समझना चाहिए।

---

(१) क्वचित् शेष इत्यनुवर्तते इति विद्यते।

(२) सर्पिषेत्यारभ्य इत्यर्थ इत्यन्तः पाठो न्यासेऽदर्शनात् मूले नासीदित्यनुमीयते।

(३) क्वचित्पाठान्तरम् दरीदृश्यते, तच्चेत्थम्—

कल्याणी खलु गाथेयं लौकिकी प्रतिभाति मे। एति जीवन्तमानन्दो नरं वर्षशतादपि॥

## आशिषि नाथः ॥ ५५ ॥

'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' पठ्यते, तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। सर्पिषो नाथते। मधुनो नाथते। आशिषीति किम्? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व॥

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥

जासि, निप्रहण, नाट, क्राथ, पिष् इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति। 'जसु हिंसायाम्', 'जसु ताडने' इति च चुरादौ पठ्यते, तस्येदं ग्रहणं न दैवादिकस्य 'जसु मोक्षणे' इत्यस्य(१)। चौरस्योज्जासयति। वृषलस्योज्जासयति। निप्रहण इति संघातविगृहीतविपर्यस्तस्य ग्रहणम्। चौरस्य निप्रहन्ति। चौरस्य निहन्ति। चौरस्य प्रणिहन्ति। चौरस्योन्नाटयति। वृषलस्योन्नाटयति। चौरस्य क्राथयति। वृषलस्य क्राथयति। निपातनाद्वृद्धिः। अयं हि घटादौ पठ्यते' 'श्रथ क्नथ क्रथ क्लथ हिंसार्थाः' इति, तत्र 'घटादयो मितः' इति मित्संज्ञायां "(२)मितां ह्रस्वः" इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि। वृषलस्य पिनष्टि। हिंसायामिति किम्? धानाः पिनष्टि। शेष इत्येव—चौरमुज्जासयति। एषामिति किम्? चौरं हिनस्ति। निप्रहण इति किम्? चौरं विहन्ति(३)॥

## व्यवहृपणोः समर्थयोः ॥ ५७ ॥

व्यवहृ, पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। शतस्य(४) व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्मान्न भवति? स्तुत्यर्थस्य पणतेराय-प्रत्यय(५) इष्यते। समर्थयोरिति किम्? शलाकां व्यवहरति। (६)गणयतीत्यर्थः। ब्राह्मणात् पणायते। स्तौतीत्यर्थः। शेष इत्येव—शतं पणते॥

## दिवस्तदर्थस्य ॥ ५८ ॥

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्येति किम्? ब्राह्मणं दीव्यति(७)। योगविभाग उत्तरार्थः॥

---

**आशिषि**—आशीरर्थक 'नाथ्' धातु के कर्मकारक से, शेषत्व की विवक्षा होने पर, षष्ठी विभक्ति होती है।

**जासिनिप्रहण**—हिंसार्थक 'जासि', नि-प्र-पूर्वक 'हन्', 'नाटि', 'क्राथि' तथा 'पिष्' धातुओं के कर्मकारक से, शेषत्व की विवक्षा में, षष्ठी होती है।

**व्यवहृ**—समानार्थक वि-अव-पूर्वक 'हृ' धातु तथा 'पण' धातु के कर्मकारक से शेष की विवक्षा में षष्ठी होती है।

**दिवस्तदर्थस्य**—वि-अव-पूर्वक 'हृ' धातु तथा 'पण' धातु के समानार्थक 'दिव्' धातु के कर्मकारक से, शेषत्व की विवक्षा में, षष्ठी विभक्ति होती है।

---

(१) अहिंसार्थत्वात् इति हेतुपदं क्वचित्।

(२) मितां ह्रस्वः इति न्यासपर्यालोचनया मूले प्रक्षिप्तः प्रतिभाति।

(३) एषामित्यारभ्य विहन्तिपर्यन्तः पाठः प्रायो नास्ति।

(४) शतस्य व्यवहरति शतं क्रयविक्रयेण विनियुङ्क्ते, दीव्यतीति वार्थः। एवं शतस्य पणते इत्यस्याप्ययमेवार्थः।

(५) न तु व्यवहारार्थस्य इत्यतिरिक्तं कुत्रचित्।

(६) मूले प्रत्युदाहरणयोरर्थनिर्देशः प्रक्षिप्तो भाति, न्यासे तद्दर्शनात्।

(७) ब्राह्मणानिति न्यासे। ब्राह्मणं दीव्यति, स्तौतीत्यर्थः।

## विभाषोपसर्गे ॥ ५९ ॥

दिवस्तदर्थस्येति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते। उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति। शतस्य प्रतिदीव्यति। सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति। सहस्रं प्रतिदीव्यति। उपसर्गस्येति किम्? शतस्य दीव्यति। तदर्थस्येत्येव—शलाकां प्रतिदीव्यति॥

## द्वितीया ब्राह्मणे ॥ ६० ॥

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति। (१)गामस्य तदहः सभायां दीव्येयुः। अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम्। सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषयापि सिद्ध्यति॥

## प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ॥ ६१ ॥

प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठीविभक्तिर्भवति देवतासम्प्रदाने सति। अग्नये छागस्य हविषो वपाया मेदसः(२) प्रेऽष्य। अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूऽहि। प्रेष्यब्रुवोरिति किम्? अग्नये छागं हविर्वपां मेदो जुहुधि। हविष इति किम्? अग्नये गोमयानि प्रेष्य। देवतासम्प्रदान इति किम्? माणवकाय पुरोडाशं प्रेष्य। ॐहविषः प्रस्थितस्य प्रतिषेधो वक्तव्यःॐ। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेऽष्य॥

## चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति(३) बहुलम्। पुरुषमृगश्चन्द्रमसः। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्यः। बहुलग्रहणं किम्? कृष्णो(४) रात्र्यै। हिमवतो हस्ती। ॐषष्ठ्यर्थे चतुर्थी वक्तव्याॐ। या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावति तस्यै श्यावदन्। या नखानि कृन्तति तस्यै कुनखः। याऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखति तस्यै खलतिः। अहल्यायै जारः॥

## यजेश्च करणे ॥ ६३ ॥

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति। घृतस्य यजते। घृतेन

---

विभाषोप—सोपसर्गक 'दिव्' धातु के कर्म से विकल्प से षष्ठी होती है।

द्वितीया—ब्राह्मणात्मक वेदभाग के क्षेत्र में अनुपसर्गक 'दिव्' धातु के कर्मकारक से, शेषत्व की विवक्षा में, द्वितीया विभक्ति होती है।

प्रेष्य—देवता के सम्प्रदान होने पर प्र-पूर्वक 'इष्' धातु तथा 'ब्रू' धातु के हविर्वाचक कर्म से, शेषत्व की विवक्षा में, षष्ठी विभक्ति होती है।

हविषः—परन्तु प्रस्थित-हविर्वाचक शब्दों से षष्ठी विभक्ति का प्रतिषेध समझना चाहिए।

चतुर्थ्यर्थे—वेद में चतुर्थी के अर्थ में षष्ठी विभक्ति बाहुल्येन होती है।

षष्ठ्यर्थे—वेद में षष्ठी के अर्थ में चतुर्थी विभक्ति भी होती है।

यजेश्च—वेद में 'यज्' धातु के करण से षष्ठी होती है।

---

(१) गामस्येति—गामस्य सभायामित्यन्वयः। तदह इत्युदाहरणम्।

(२) प्रेऽष्य इत्यत्र अनुप्रेक्ष्येति न्यासे।

(३) देवतासम्प्रदाने सति इत्यपि क्वचित्।

(४) कृष्ण इति—बहुलग्रहणात् रात्र्यै इत्यत्र सप्तम्यर्थे चतुर्थी।

यजते। सोमस्य यजते। सोमेन यजते(१)॥

## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥ ६४ ॥

"बहुलं छन्दसि" इति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते। कृत्वोर्थग्रहणं किम्? अहनि शेते, रात्रौ शेते। प्रयोगग्रहणं किम्? अहनि भुक्तम्। गम्यते हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति। कालग्रहणं किम्? द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरण इति किम्? द्विरह्नो भुङ्क्ते। शेष इत्येव—द्विरहन्यधीते॥

## कर्तृकर्मणोः कृति ॥ ६५ ॥

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति। भवतः शायिका। भवत आसिका। कर्मणि—अपां स्रष्टा, पुरां भेत्ता, वज्रस्य भर्त्ता। कर्तृकर्मणोरिति किम्? शस्त्रेण भेत्ता। कृतीति किम्? तद्धितप्रयोगे मा भूत्—कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्। शेष इति निवृत्तम्, पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृतीति ब्रूयात्॥

## उभयप्राप्तौ कर्मणि ॥ ६६ ॥

पूर्वेण षष्ठी प्राप्ता नियम्यते। उभयप्राप्ताविति बहुव्रीहिः। उभयोः प्राप्तिर्यस्मिन् कृति सोऽयमुभयप्राप्तिः, तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन। बहुव्रीहिविज्ञानादिह नियमो न भवति—आश्चर्यमिदमोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इति। ॐअकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्ॐ। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा देवदत्तस्य कटस्य। ॐशेषे विभाषाॐ। अकाकारयोः स्त्रीप्रत्ययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते—विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा॥ केचिदविशेषेणैव विभाषामिच्छन्ति—शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा॥

## क्तस्य च वर्तमाने ॥ ६७ ॥

"न लोकाव्ययनिष्ठा" इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्त्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। क्तस्येति

---

कृत्वोर्थ—कृत्वसुच् प्रत्यय तथा उसके अर्थ के अभिधायक प्रत्ययों के प्रयोग होने पर कालवाचक अधिकरण कारक से षष्ठी विभक्ति होती है।

कर्तृकर्मणोः—कृत्प्रत्यय के प्रयोग में कर्त्ता तथा कर्म कारकों से षष्ठी विभक्ति होती है।

उभयप्राप्तौ—यदि कृत्प्रत्यय के प्रयोग में कर्त्ता तथा कर्म-इन दोनों से षष्ठी की प्राप्ति पूर्वसूत्र से होती हो तो केवल कर्मकारक से ही षष्ठी विभक्ति होती है।

अकाकारयोः—'अका' तथा 'आ' इन स्त्रीप्रत्ययों के प्रयोग में उपर्युक्त नियम मान्य नहीं होता है।

शेषे विभाषा—शेष स्त्रीप्रत्ययान्त कृदन्त के प्रसङ्ग में उपर्युक्त व्यवस्था वैकल्पिक होती है।

क्तस्य च—वर्त्तमानकाल में विहित क्तप्रत्यय से युक्त शब्द के योग में भी षष्ठी विभक्ति होती है।

---

(१) करण इति किम्? अन्यत्र मा भूत् इति क्वचित्।

किम् ? ओदनं पचमानः । वर्तमान इति किम् ? ग्रामं गतः । ॐनपुंसके भाव उपसंख्यानम्ॐ । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतम् । ॐशेषविज्ञानात् सिद्धम्ॐ । तथा च कर्तृविवक्षायां तृतीयाऽपि भवति—छात्रेण हसितमिति ॥

## अधिकरणवाचिनश्च ॥ ६८ ॥

"क्तोधिकरणे च" इति वक्ष्यति, तस्य प्रयोगे षष्ठी विभक्तिर्भवति । अयमपि प्रतिषेधापवादो योगः । इदमेषामासितम् । इदमेषां शयितम् । इदमहेः सृप्तम् । इदं वनकपेर्यातम् । इदमेषां भुक्तम् । इदमेषामशितम् । द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी, द्वितीयावत्—नेताऽश्वस्य ग्रामस्य चैत्रः । अन्ये प्रधाने कर्मण्याहुः, तदा—नेता अश्वस्य ग्रामं चैत्रः(१) ॥

## न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ६९ ॥

"कर्तृकर्मणोः कृति" इति षष्ठी प्राप्ता प्रतिषिद्ध्यते । ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति । ल इति शतृशानचौ कानच्क्वसू किकिनौ च गृह्यन्ते—ओदनं पचन् । ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । पपिः सोमम् । ददिर्गाः । उ—कटं चिकीर्षुः । ओदनं बुभुक्षुः । कन्यामलङ्करिष्णुः । इष्णुचोऽपि प्रयोगे निषेधः(२) । उक—आगामुकं(३) वाराणसीं रक्ष आहुः । ॐउकप्रतिषेधे कमेर्भाषायामप्रतिषेधःॐ । दास्याः कामुकः । अव्यय—कटं कृत्वा । ओदनं भुक्त्वा । ॐअव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधःॐ । पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन् । निष्ठा—ओदनं भुक्तवान् । देवदत्तेन कृतम् । खलर्थ—ईषत्करः कटो भवता । ईषत्पानः सोमो भवता । तृन्निति प्रत्याहारग्रहणं "लटः शतृशानचौ" इत्यारभ्य आ तृनो नकारात् । तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति—सोमं पवमानः । नटमाघ्नानः । अधीयन् पारायणम् । कर्ता कटान् । वदिता जनापवादान् । ॐद्विषः शतुर्वा वचनम्ॐ । चौरं द्विषन् । चौरस्य द्विषन् ॥

---

नपुंसके—नपुंसक में विहित भावार्थक क्त-प्रत्यय के योग में भी षष्ठी समझनी चाहिए ।

शेषविज्ञानात्—सम्बन्ध-सामान्य की विवक्षा से ही इष्टसिद्धि हो जाने के कारण 'नपुंसके भावे' आदि उपसंख्यान अनावश्यक है ।

अधिकरण—अधिकरण-विहित-क्त-प्रत्ययान्त शब्द के योग में भी षष्ठी विभक्ति होती है ।

न लोकाव्यय—लकारस्थानिक आदेश, उप्रत्यय, उकप्रत्यय, अव्यय, निष्ठाप्रत्यय, खलर्थक प्रत्यय तथा तृन् प्रत्यय के प्रयोग होने पर 'कर्तृकर्मणोः कृति' से षष्ठी का विधान नहीं होता है ।

उकप्रतिषेधे—उकप्रत्यय के प्रयोग में षष्ठी-प्रतिषेध के विषय में यह समझना चाहिए कि भाषा में प्रयुज्यमान 'कम्'-धातुविहित उकप्रत्यय के प्रयोग में षष्ठी-प्रतिषेध नहीं होता है ।

अव्यय—अव्यय के प्रयोग में उपदिष्ट षष्ठीप्रतिषेध के प्रसङ्ग में तोसुन् तथा कसुन् प्रत्ययान्त अव्ययों के प्रयोग में षष्ठी-प्रतिषेध नहीं समझना चाहिए ।

द्विषः—'द्विष्'-धातुविहित शतृप्रत्यय के प्रयोग में षष्ठी का प्रतिषेध विकल्प से समझना चाहिए ।

---

(१) द्विकर्मकाणामित्यतः चैत्र एतत्पर्यन्तग्रन्थः प्रायो नास्ति ।

(२) इष्णुचोऽपि प्रयोगे निषेध इति प्रायः सर्वत्र नास्ति ।

(३) आगामुकमिति—रक्षांसि वाराणसीप्रत्यागमनशीलानि भवन्ति शापादिमोक्षार्थमित्यर्थः ।

## अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥

अकस्य भविष्यति काले विहितस्येनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी विभक्तिर्न भवति। कटं कारको व्रजति। ओदनं भोजको व्रजति। इनः खल्वपि-ग्रामं गमी। ग्रामं गामी। आधमर्ण्ये-शतं दायी। सहस्रं दायी। भविष्यदाधमर्ण्ययोरिति किम्?। यवानां लावकः। सक्तूनां पायकः। अवश्यं कारी कटस्य। इह कस्मान्न भवति—वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शक इति? भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम्॥

## कृत्यानां कर्तरि वा ॥ ७१ ॥

"कर्तृकर्मणोः कृति" इति नित्यं षष्ठी प्राप्ता,कर्त्तरि विकल्प्यते। कृत्यानां प्रयोगे कर्त्तरि वा षष्ठी विभक्तिर्भवति, न कर्मणि(१)। भवता कटः कर्तव्यः। भवतः कटः कर्तव्यः। कर्त्तरीति किम्? गेयो माणवकः साम्नाम्। ❀उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः❀। क्रष्टव्या ग्रामं शाखा देवदत्तेन। नेतव्या ग्राममजा देवदत्तेन॥

## तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ॥ ७२ ॥

तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्यां पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा। शेषविषये तृतीयाविधानात् तया मुक्ते षष्ठ्येव भवति—तुल्यो देवदत्तेन। तुल्यो देवदत्तस्य। सदृशो देवदत्तेन। सदृशो देवदत्तस्य। अतुलोपमाभ्यामिति किम्? तुला देवदत्तस्य नास्ति। उपमा कृष्णस्य न विद्यते। वेति वर्तमानेऽन्यतरस्यांग्रहणमुत्तर-सूत्रे तस्य चकारेणानुकर्षणार्थम्। इतरथा हि तृतीयानुकृष्येत॥

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥

आशिषि गम्यमानायाम् आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। चकारो विकल्पानुकर्षणार्थः। शेषे चतुर्थीविधानात्तया मुक्ते षष्ठी विभक्तिर्भवति। ❀अत्रायुष्यादीनां पर्यायग्रहणं कर्त्तव्यम्❀(२)। आयुष्यं देवदत्ताय

---

अकेनोः—भविष्यदर्थक अक-प्रत्यय तथा भविष्यत् एवम् आधमर्ण्य अर्थ में विहित 'इन्' प्रत्यय के प्रयोग में षष्ठी नहीं होती है।

कृत्यानाम्—कृत्यप्रत्यय के प्रयोग में कर्त्ता से विकल्प से षष्ठी होती है, परन्तु कर्म से कभी नहीं।

उभयप्राप्तौ—परन्तु कृत्यप्रत्यय के परे उभय (कर्त्ता तथा कर्म) से षष्ठीप्राप्ति यदि हो तो सबसे षष्ठी का प्रतिषेध समझना चाहिए।

तुल्यार्थैः—तुला तथा उपमा शब्दों से अतिरक्त तुल्यार्थक शब्दों के योग में विकल्प से तृतीया तथा षष्ठी विभक्तियाँ होती हैं।

चतुर्थी—आशीर्वाद के प्रतीत होने पर आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ तथा हित शब्दों के योग में चतुर्थी विभक्ति विकल्प से होती है।

अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम्—इस सूत्र में आयुष्य आदि शब्द-मात्र का नहीं

---

(१) न कर्मणि इति क्वचिन्नास्ति।
(२) वार्तिकमिदं क्वचिन्नोपलभ्यते।

भूयात्। आयुष्यं देवदत्तस्य भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। मद्रं देवदत्ताय भूयात्। मद्रं देवदत्तस्य। भद्रं देवदत्ताय, भद्रं देवदत्तस्य। कुशलं देवदत्ताय, कुशलं देवदत्तस्य। निरामयं देवदत्ताय, निरामयं देवदत्तस्य। सुखं देवदत्ताय, सुखं देवदत्तस्य। शं देवदत्ताय, शं देवदत्तस्य। अर्थो देवदत्ताय, अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य। हितं देवदत्ताय, हितं देवदत्तस्य। 'पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य। आशिषीति किम्? आयुष्यं देवदत्तस्य तपः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य तृतीयः पादः॥ २॥ ३॥

---

किन्तु उनके अर्थ में प्रयुक्त अन्यान्य शब्दों का भी परिग्रहण समझना चाहिए।

द्वितीय अध्याय का तृतीय पाद समाप्त हुआ॥

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

## द्विगुरेकवचनम् ॥ १ ॥

द्विगुः समास एकवचनं भवति। एकस्य वचनमेकवचनम्। एकस्यार्थस्य वाचको भवतीत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद्भवतीति। (१)समाहारद्विगोश्चेदं ग्रहणं नान्यस्य। पञ्चपूलाः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्यैकत्वादनुप्रयोगेऽप्येकवचनं भवति—पञ्चपूलीयं शोभनेति ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥

एकवचनमिति वर्त्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि सम्पद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद्भवति, तथा तूर्याङ्गानां सेनाङ्गानां च। प्राण्यङ्गानां तावत्—पाणिपादम्, शिरोग्रीवम्। तूर्याङ्गानाम्–मार्दङ्गिकपाणविकम्, (२)वीणावादकपरिवादकम्। सेनाङ्गानाम्–रथिकाश्वारोहम्, रथिकपादातम्। हस्त्यश्वादिषु परत्वात् पशुद्वन्द्वे विभाषयैकवद् भवति। इतरेतरयोगे समाहारे च द्वन्द्वो विहितः, तत्र समाहारस्यैकत्वात्सिद्धमेवैकवचनम्। इदं तु प्रकरणं विषयविभागार्थम्—प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधिपयआदीनामितरेतरयोग एव, वृक्षमृगादीनामुभयत्रेति ॥

## अनुवादे चरणानाम् ॥ ३ ॥

चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते। चरणानां द्वन्द्व एकवद्भवति अनुवादे गम्यमाने। प्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्त्तनमात्रमनुवादः। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्। कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदैवमुदाहरणम्। यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम्। अनुवाद इति किम्? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः। ॐस्थेणोरद्यतन्यां चेति वक्तव्यम्ॐ। स्थेणोरिति किम्? अनन्दिषुः कठकालापाः। अद्यतन्यामिति किम्? उद्यन्ति कठकालापाः ॥

## अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥

अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्यु क्रतुः। अध्वर्युक्रतुवाचिनां शब्दानामनपुंसक-

---

द्विगुरेक—द्विगु समास एक ही पदार्थ का वाचक ( अर्थात् द्विगुसमासविशिष्ट का एकवचन में प्रयोग ) होता है।

द्वन्द्वश्च—प्राण्यङ्गवाचक, वाद्याङ्गवाचक तथा सेनाङ्गवाचक शब्दों मे विहित द्वन्द्व समास को एकवद्भाव होता है।

अनुवादे—चरण-वाचक शब्दों में विहित द्वन्द्व को एकवद्भाव होता है अनुवाद के गम्यमान होने पर।

स्थेणोः—लुङ्-लकार-विशिष्ट 'स्था' तथा 'इण्' धातु के कर्म होने पर ही चरणवाचकद्वन्द्व एकवत् होता है—यह अवगन्तव्य है।

अध्वर्यु—अध्वर्यु-विहित क्रतुओं के वाचक नपुंसकभिन्नशब्दविहित द्वन्द्व को एकवद्भाव होता है।

---

( १ ) समाहारे द्विगोरिति न्यासे।

( २ ) वीणावादकेति नित्यं क्रीडाजीविकयोरिति समासः, विपञ्ची परिवादिनी, तज्जीविकः परिवादकः इति।

लिङ्गानां द्वन्द्व एकवद्भवति। अध्वर्युक्रतुरनपुंसकं द्वन्द्व इति गौणो निर्देशः। अर्काश्वमेधम्। सायाह्नातिरात्रम्। अध्वर्युक्रतुरिति किम्? इषुवज्रौ, उद्भिद्बलभिदौ। अनपुंसकमिति किम्? राजसूयवाजपेये। इह कस्मान्न भवति—दर्शपौर्णमासौ? क्रतुशब्दः सोमयज्ञेषु (१)रूढः॥

## अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥

अध्ययनेन निमित्तेन येषामविप्रकृष्टा प्रत्यासन्ना आख्या तेषां द्वन्द्व एकवद्भवति। पदकक्रमकम्। क्रमकवार्तिकम्(२)। सम्पाठः पदानां क्रमस्य च प्रत्यासन्नः। अध्ययनत इति किम्? पितापुत्रौ। अविप्रकृष्टाख्यानामिति किम्? याज्ञिकवैयाकरणौ॥

## जातिरप्राणिनाम् ॥ ६ ॥

जातिवाचिनां शब्दानां द्वन्द्व एकवद्भवति, प्राणिनो वर्जयित्वा। (३)आराशस्त्रि। धानाशष्कुलि। जातिरिति किम्? नन्दकपाञ्चजन्यौ। अप्राणिनामिति किम्? ब्राह्मणक्षत्रियविट्शूद्राः। नञिवयुक्तन्यायेन द्रव्यजातीनामयमेकवद्भावो न गुणक्रियाजातीनाम्—रूपरसगन्धस्पर्शाः, गमनाकुञ्चनप्रसारणानि। (४)जातिपरत्वे च जातिशब्दानामयमेकवद्भावो विधीयते, न(५) नियतद्रव्यविवक्षायाम्—इह कुण्डे वदराऽऽमलकानि तिष्ठन्तीति॥

## विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ ७ ॥

विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद्भवति। नद्यवयवो द्वन्द्वो नदीत्युच्यते। देशावयवश्च देशः। नदी देश इत्यसमासनिर्देश एवायम्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गाशोणम्। देशः खल्वपि-कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्, कुरुकुरुजाङ्गलम्। विशिष्टलिङ्ग इति किम्? गङ्गायमुने, मद्रकेकयाः। नदी देश इति किम्? कुक्कुटमयूर्यौ। अग्रामा इति किम्? जाम्बवश्च शालूकिनी च, जाम्बवशालूकिन्यौ। नदीग्रहणमदेशत्वात्। जनपदो हि देशः। तथा च पर्वतानां ग्रहणं न भवति—कैलासश्च गन्धमादनं च कैलासगन्धमादने। *अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः*। इह मा भूत्—मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम्। *उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः*। सौर्यं च नगरं केतवतं च ग्रामः सौर्यकेतवते॥

---

अध्ययन—अध्ययन की दृष्टि में समीपस्थ पदार्थों के वाचक शब्दों में विहित द्वन्द्व को एकवद्भाव होता है।

जाति—अप्राण्यर्थक जाति-वाचक शब्दों में विहित द्वन्द्व को एकवद्भाव होता है।

विशिष्ट—विभिन्न लिङ्ग वाले नदी-वाचक शब्दों तथा ग्रामवाचकभिन्न प्रदेशवाचक शब्दों में विहित द्वन्द्व समास एकवत् होता है।

अग्रामा—ग्रामवाचकभिन्न के अन्तर्गत नगरवाचक शब्दों का समावेश नहीं होता है।

उभयतश्च—परन्तु यदि ग्रामवाचक तथा नगरवाचक शब्दों में ही द्वन्द्वसमास हुआ हो तब तो ग्रामवाचकशब्दनिमित्तक एकद्भावप्रतिषेध ही समझना चाहिए।

---

(१) सोमयागेषु इति न्यासे पाठः।

(२) वार्तिकम् इति—वृत्तिः संहिता, तामधीते वार्तिकः।

(३) आरा प्रमोदः, शष्कुली पण्णां रसानां कुलं शष्कुलीति।

(४) जातिपरत्वे जातिप्राधान्ये।

(५) नियतेति—यदा क्वचिद्देशादौ नियतानां द्रव्यविशेषाणां विवक्षा तदा जातिशब्दत्वेप्येकवद्भावो न भवतीत्यर्थः।

## क्षुद्रजन्तवः ॥ ८ ॥

अपचितपरिमाणः क्षुद्रः। क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद्भवति। दंशमशकम्। यूकालिक्षम्। क्षुद्रजन्तव इति किम्? ब्राह्मणक्षत्रियौ॥

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः।
(१)शतं वा प्रसृतौ येषां केचिदानकुलादपि॥

आ नकुलादपीतीयमेव स्मृतिः प्रमाणम्, इतरासां तद्विरोधात्॥

## येषां च विरोधः शाश्वतिकः ॥ ९ ॥

विरोधो वैरम्, शाश्वतिको नित्यः। येषां शाश्वतिको विरोधस्तद्वाचिनां शब्दानां द्वन्द्व एकवद्भवति। मार्जारमूषकम्। अहिनकुलम्। शाश्वतिक इति किम्? गौपालिशालङ्कायनाः कलहायन्ते। चकारः पुनरस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनामनेन नित्यमेकवद्भावो भवति—श्वशृगालम्, अश्वमहिषम्, काकोलूकम्॥

## शूद्राणामनिरवसितानाम् ॥ १० ॥

निरवसानं बहिष्करणम्। कुतो बहिष्करणम्? पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति ते निरवसिताः, न निरवसिताः अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद्भवति। तक्षाऽयस्कारम्। रजकतन्तुवायम्। अनिरवसितानामिति किम्? चण्डालमृतपाः॥

## गवाश्वप्रभृतीनि च ॥ ११ ॥

गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति। गवाश्वम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्। कुब्जकैरातकम्। पुत्रपौत्रम्। श्वचाण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। (२)शाटीपिच्छकम्। उष्ट्रखरम्। उष्ट्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनशिरीषम्। तृणोलपम्। दासीदासम्। कुटीकुटम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्। रूपान्तरे तु नायं विधिर्भवति—गोश्वम्, गोश्वौ। पशुद्वन्द्वविभाषैव भवति॥

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १२ ॥

वृक्ष, मृग, तृण, धान्य, व्यञ्जन, पशु, शकुनि, अश्ववडव, पूर्वापर, अधरोत्तर इत्ये-

---

क्षुद्र—क्षुद्र-जन्तु-वाचक शब्दों का द्वन्द्व एकवत् होता है।

येषाम्—जिनमें नित्य-विरोध हो तद्वाचक पदों का द्वन्द्व भी एकवत् होता है।

शूद्राणाम्—जिनके भोजन करने से पात्रों का संस्कार सम्भावित है ऐसे शूद्रजातिवाचक शब्दों का द्वन्द्व एकवत् होता है।

गवाश्व—गवाश्वम् आदि द्वन्द्व साधु हैं।

विभाषा—वृक्षवाचक, मृगवाचक, तृणवाचक, धान्यवाचक, व्यञ्जनवाचक, पशुवाचक, शकुनिवाचक, अश्ववडव, पूर्वापर, अधरोत्तर—इन शब्दों का द्वन्द्व विकल्प से एकवत् होता है।

---

(१) शतं वेति—प्रसृतिरञ्जलेरर्द्धम्, येषां शतं प्रसृतौ भवति शतेनार्द्धाञ्जलिः पूर्यत इत्यर्थः। यद्वा प्रसृतिरञ्जलिः।

(२) शाटीपटीकमिति पदमंजर्याम्।

तेषां द्वन्द्वो विभाषैकवद्भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। ॐबहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्ॐ। एषां बहुप्रकृतिरेव द्वन्द्व एकवद्भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। रुरुपृषतौ। हंसचक्रवाकौ। यूकालिक्षे। व्रीहियवौ। कुशकाशौ॥

## विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥

परस्परविरुद्धं विप्रतिषिद्धम्। विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्व एकवद्भवति। विभाषानुकर्षणार्थश्चकारः। शीतोष्णम्, शीतोष्णे। सुखदुःखम्, सुखदुःखे। जीवितमरणम्, जीवितमरणे। विप्रतिषिद्धमिति किम्? कामक्रोधौ। अनधिकरणवाचीति किम्? शीतोष्णे उदके॥

## न दधिपयआदीनि ॥ १४ ॥

यथायथमेकवद्भावे प्राप्ते प्रतिषेध आरभ्यते। दधिपयआदीनि शब्दरूपाणि नैकवद्भवन्ति। दधिपयसी। सर्पिर्मधुनी। मधुसर्पिषी। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। (१)परिव्राट्कौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णौ। इध्माबर्हिषी। निपातनाद्दीर्घः। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यावसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे॥

## अधिकरणैतावत्त्वे च ॥ १५ ॥

नेति वर्त्तते। अधिकरणं(२) वर्त्तिपदार्थः, स हि समासस्यार्थस्याधारः, तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद्भवति। यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते। दश(३) दन्तोष्ठाः। दश मार्दङ्गिकपाणविकाः॥

## विभाषा समीपे ॥ १६ ॥

अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्व एकवद्भवति। उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्। उपदशा मार्दङ्गिकपाणविकाः। अव्ययस्य संख्ययाऽव्ययीभावोपि विहितो बहुव्रीहिरपि। तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः॥

---

बहुप्रकृतिः—फलवाचक, सेनावाचक, वनस्पतिवाचक, मृगवाचक, शकुनिवाचक, क्षुद्रजन्तुवाचक, धान्यवाचक तथा तृणवाचक शब्दों के बहुवचनान्त में हुआ द्वन्द्व ही एकवत् होता है।

विप्रति—अनधिकरणवाचक परस्पर-विरुद्धार्थाभिधायी शब्दों का द्वन्द्व एकवत् होता है विकल्प से।

न दधिपय—दधिपयस् आदि शब्दों में विहित द्वन्द्व एकवत् नहीं होता है।

अधि—अधिकरण के परिमाण के वाचक शब्दों में विहित द्वन्द्व एकवत् नहीं होता है।

विभाषा—अधिकरण की इयत्ता के सामीप्य के अभिधान में विकल्प से एकवत् होता है।

---

(१) परिव्राट्पदस्य स्थाने क्वचित्परिव्राजक इति पाठः।

(२) वर्त्तनं वर्त्तः=समासः। भावे घञ्। वर्तोऽस्यास्तीति वर्ति=समासावयवभूतम्। वर्ति च तत्पदं चेति वर्तिपदम्, तस्य पदस्यार्थो वर्तिपदार्थः।

(३) न्यासे दश इमे दन्तोष्ठा इति पाठः।

## स नपुंसकम् ॥ १७ ॥

यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च । पञ्चगवम् । दशगवम् । द्वन्द्वः खल्वपि—पाणिपादम्, शिरोग्रीवम् । परलिङ्गतापवादो योगः । ॐअकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यतेॐ । पञ्चपूली । दशरथी । ॐवाऽऽबन्तः स्त्रियामिष्टःॐ । पञ्चखट्वम् । पञ्चखट्वी । ॐअनो नलोपश्च वा च द्विगुः स्त्रियाम्ॐ । पञ्चतक्षम् । पञ्चतक्षी । ॐपात्रादिभ्यः प्रतिषेधो वक्तव्यःॐ । पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥

## अव्ययीभावश्च ॥ १८ ॥

अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति । अधिस्त्रि । उपकुमारि । उन्मत्तगङ्गम् । लोहितगङ्गम् । पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ताऽन्यपदार्थप्रधानस्याभिधेयलिङ्गता, अत इदमुच्यते । अनुक्तसमुच्चयार्थश्चकारः । ॐपुण्यसुदिनाभ्यामह्नः क्लीवतेष्यतेॐ । पुण्याहम् । सुदिनाहम् । ॐपथः संख्याव्ययादेः क्लीबतेष्यतेॐ । त्रिपथम् । चतुष्पथम् । विपथम् । सुपथम् । ॐक्रियाविशेषणानां च क्लीवतेष्यतेॐ । (१)मृदु पचति । शोभनं पचति ॥

## तत्पुरुषोऽनञ् कर्मधारयः ॥ १९ ॥

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते । नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवतीत्येतदधिकृतं वेदितव्यम् यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यति—“विभाषा सेनासुरा” इति । ब्राह्मणसेनम् । ब्राह्मणसेना । तत्पुरुष इति किम् ? दृढसेनो राजा । अनञिति किम् ? असेना । अकर्मधारय इति किम् ? परमसेना ॥

## संज्ञायां कन्थोशीनरेषु ॥ २० ॥

संज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु

---

स नपुंसकम्—इस एकवद्भाव के प्रकरण में जो द्वन्द्व तथा द्विगुसमास एकवत् बतलाए गए हैं उनका लिङ्ग नपुंसक होता है ।

अकारान्तोत्तर—जिस द्विगु समास का उत्तरावयव अकारान्त हो वह स्त्रीलिङ्ग होता है ।

वाऽऽबन्तः—परन्तु जिस द्विगु समास का उत्तरावयव टाप्-प्रत्ययान्त होता है उसका स्त्रीत्व वैकल्पिक होता है ।

अनो—अन्नन्तोत्तरपद द्विगु समास में विकल्प से नलोप तथा स्त्रीत्व होते हैं ।

पात्रादिभ्यः—पात्राद्युत्तरपद द्विगु का स्त्रीत्व नहीं होता है ।

अव्ययीभावश्च—अव्ययीभाव समास भी नपुंसक लिङ्ग होता है ।

पुण्य—पुण्य तथा सुदिन शब्दों से उत्तरपद के रूप में समस्यमान समस्त शब्दों का नपुंसक लिङ्ग होता है ।

पथः—संख्यापूर्वपदक एवम् अव्ययपूर्वपदक पथिन्शब्दान्त समास की नपुंसकलिङ्गता भी प्रतिपाद्य है ।

क्रिया—क्रियाविशेषण की नपुंसकता भी अवगन्तव्य है ।

तत्पुरुषोऽनञ्—अब यहाँ इस विषय को अधिकृत समझना चाहिए कि नञ्समास तथा कर्मधारय को छोड़ कर सभी तत्पुरुष समासों का नपुंसक लिंग होता है ।

संज्ञायाम्—संज्ञा के विषय में कन्था-शब्दान्त तत्पुरुष नपुंसकलिंग होता है, यदि वह कन्था उशीनर-जनपद-सम्बन्धी हो ।

---

( १ ) ‘क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्या’ इति वार्तिकं क्वचिदधिकं दृश्यते ।

भवति। सौशमिकन्थम्। आह्वरकन्थम्। संज्ञायामिति किम्? वीरणकन्था। उशीनरेष्विति किम्? दाक्षिकन्था। परवल्लिङ्गतापवाद इदं प्रकरणम्॥

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम्॥ २१॥

उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः। उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम्। तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायां तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम्। आख्यातुमिच्छा आचिख्यासा। यद्युपज्ञेयस्योपक्रम्यस्य चार्थस्यादिराख्यातुमिष्यते तत एतद्भवति। पाणिन्युपज्ञमकालकं (१)व्याकरणम्। पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं(२) व्याकरणम्। व्याड्युपज्ञं (३)दुष्करणम्। आद्योपक्रमं प्रासादः। नन्दोपक्रमाणि मानानि। दर्शनीयोपक्रमं सुकुमारम्। उपज्ञोपक्रममिति किम्? वाल्मीकिश्लोकाः। तदाद्याचिख्यासायामिति किम्? देवदत्तोपज्ञो रथः, यज्ञदत्तोपक्रमो रथः॥

## छाया बाहुल्ये॥ २२॥

"विभाषा सेनासुराच्छाया" इति विभाषां वक्ष्यति, नित्यार्थमिदं वचनम्। छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मो बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्। बाहुल्य इति किम्? कुड्यच्छाया॥

## सभा राजाऽमनुष्यपूर्वा॥ २३॥

सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत्सभा राजपूर्वाऽमनुष्यपूर्वा च भवति। इनसभम्। ईश्वरसभम्। इह कस्मान्न भवति? राजसभा। पर्यायवचस्यैवेष्यते, तदुक्तम्—जित्पर्यायस्यैव राजाद्यर्थम् इति। अमनुष्यपूर्वा–रक्षःसभम्, पिशाचसभम्। इह कस्मान्न भवति, काष्ठसभा? अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्त्तते। राजामनुष्यपूर्वेति किम्? देवदत्तसभा॥

## अशाला च॥ २४॥

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति। संघातवचनोऽत्र सभा-

---

उपज्ञोपक्रमम्—उपज्ञान्त तथा उपक्रमान्त तत्पुरुष नपुंसकलिङ्ग होते हैं यदि उपज्ञेय तथा उपक्रम्य के प्रथमकर्त्ता ( आदि कर्त्ता ) के अभिधान की इच्छा हो।

छाया—बाहुल्य अर्थ में छायाशब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है।

सभा—राजपर्यायशब्दपूर्वक तथा अमनुष्यपूर्वक सभाशब्दान्त तत्पुरुष नपुंसक लिङ्ग होता है।

अशाला च—शालार्थक-भिन्न-सभाशब्दान्त तत्पुरुष भी नपुंसक-लिङ्ग होता है।

---

( १ ) अकालापकम् इति मुद्रितः पाठः।

( २ ) अकालकमिति—पूर्वाणि व्याकरणान्यद्यतनादिकालपरिभाषायुक्तानि, तद्रहितं तु व्याकरणं पाणिनिप्रभृतिप्रवृत्तमित्यस्ति तदादित्वस्याख्यानम्।

( ३ ) दुषिति संकेतशब्दः, यथात्र वृत्करणम्। दशदुष्करणम् इति न्यासपाठः। तत्रायमर्थः—व्याडिरप्यत्र युगपत्कालभाविनां विधीनां मध्ये दश दुष्करणानि कृत्वा परिभाषितवान्—पूर्वं पूर्वं कालमिति। पूर्वं प्रथमं पूर्वं भूताख्यं कालं परिभाषितवान्, पश्चाद् वर्तमानादिकमित्यर्थः। अथवा पूर्वं पूर्वमिति प्रथमतरमित्यर्थः। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्विर्वचनमिति ( ८।१।१२ वा० ) द्विर्वचनम्। अस्य दश दुष्करणानीत्यनेन सम्बन्धः, तदयमर्थः—प्रथमतरं दश दुष्करणानि कृत्वा कालमद्यतनादिकं परिभाषितवान् इति तन्त्रप्रदीपे मैत्रेयरक्षितः।

## भाषायां सदवसश्रुवः ॥ १०८ ॥

सद, वस, श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति। आदेशविधानादेव लिडपि तद्विषयोऽनुमीयते। उपसेदिवान् कौत्सः पाणिनिम्। तेन मुक्ते यथा प्राप्तं प्रत्यया भवन्ति। उपासीदत्। उपासीदत्। उपससाद। अनूषिवान् कौत्सः पाणिनिम्। अन्ववत्सीत्। अन्ववसत्। अनूवास। उपशुश्रुवान् कौत्सः पाणिनिम्। उपाश्रौषीत्। उपाश्रृणोत्। उपशुश्राव। लुङ्लङ्विषये परस्तादनुवृत्तेः क्वसुर्भवति ॥

## उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥

उपेयिवान्, अनाश्वान्, अनूचान इत्येते शब्दा निपात्यन्ते। उपपूर्वादिणः क्वसुः, द्विर्वचनमभ्यासदीर्घत्वम्, तत्सामर्थ्यादेकादेशप्रतिबन्धः, तत्र "वस्वेकाजाद्घसाम्" इत्यनेकाच्त्वादिण् न प्राप्नोति, स निपात्यते, अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः—उपेयिवान्। क्रादिनियमात्प्राप्तश्च "वस्वेकाजाद्घसाम्" इति प्रतिषिद्धः, स पुनरिट् प्रतिप्रसूयते, तेनाजादौ न भवति—उपेयुषः, उपेयुषा। न चात्रोपसर्गास्तन्त्रम्। अन्योपसर्गपूर्वान्निरुपसर्गात्तु भवत्येव—समीयिवान्, ईयिवान्। वावचनानुवृत्तेश्च पूर्ववल्लुङादयोऽपि भवन्ति—उपागात्, उपैत्, उपेयाय। अश्नोतेर्नञ्पूर्वात् क्वसुर्निपात्यते, इडभावश्च—अनाश्वान्, नाशीत्, नाश्नात्, नाश। वचेरनुपूर्वात् कर्त्तरि कानन्निपात्यते—अनूचानः, अन्ववोचत्, अन्वब्रवीत्, अनूवाच ॥

## लुङ् ॥ ११० ॥

भूत इत्येव। भूतेर्थे वर्त्तमानाद् धातोर्लुङ् प्रत्ययो भवति। अकार्षीत्। अहार्षीत्। ॐवसतेर्लुङ् रात्रिविशेषे जागरणसन्ततौ वक्तव्यःॐ। क्व भवानुषितः ? अहमत्रावात्सम् ॥

## अनद्यतने लङ् ॥ १११ ॥

भूत इत्येव। अनद्यतन इति बहुव्रीहिनिर्देशः। अविद्यमानाद्यतने भूतेऽर्थे वर्त्तमानाद्धातोर्लङ् प्रत्ययो भवति। अकरोत्। अहरत्। बहुव्रीहिनिर्देशः किमर्थः ? अद्य ह्यो वा अभुंक्ष्महीति व्यामिश्रे मा भूत्। ॐपरोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यःॐ। अरुणद्यवनः साकेतम्। अरुणद्यवनो माध्यमिकानिति ॥

## अभिज्ञावचने लट् ॥ ११२ ॥

अभिज्ञा स्मृतिः, तद्वचन उपपदे भूतानद्यतने लृट्प्रत्ययो भवति। लङोऽपवादः।

---

भाषायाम्—'सद्', 'वस' एवम् 'श्रु' धातुओं से परवर्त्ती लिट् को भाषा में विकल्प से क्वसु आदेश होता है।

उपेयिवान्—'उपेयिवान्', 'अनाश्वान्' तथा 'अनूचान' शब्दों का निपातन होता है।

लुङ्—धातु से भूतकाल में लुङ् प्रत्यय होता है।

वसतेः—यदि उत्तर देनेवाला रात्रिशेष में पूरी तरह जगकर रहा हो तो ऐसी दशा में अनद्यतन भूतकाल में भी 'वस्' धातु से लुङ् प्रत्यय होता है।

अनद्यतने—अनद्यतन भूतकाल में धातु से लङ् प्रत्यय होता है।

परोक्षे च—लोकप्रसिद्ध परोक्ष पदार्थ भी यदि लङन्तशब्द के प्रयोक्ता के दर्शन का विषय होने की योग्यता रखता हो तो धातु से लङ् प्रत्यय होता है।

अभिज्ञा—स्मृतिवाचक शब्द के उपपद होने पर अनद्यतन भूतकाल में धातु से लट् प्रत्यय होता है।

अभिजानासि देवदत्त ! कश्मीरेषु वत्स्यामः । वचनग्रहणं पर्यायार्थम्—अभिजानासि स्मरसि, बुध्यसे, चेतयस इति ॥

## न यदि ॥ ११३ ॥

यच्छब्दसहितेऽभिज्ञावचन उपपदे लृट् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिद्धयते । अभिजानासि देवदत्त ! यत्कश्मीरेष्ववसाम । वासमात्रं स्मर्यते, नत्वपरं किञ्चिल्लक्ष्यते । तेनोत्तरसूत्रस्य नायं विषयः ॥

## विभाषा साकाङ्क्षे ॥ ११४ ॥

यदीति नानुवर्त्तते । उभयत्र विभाषेयम् । अभिज्ञावचन उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति साकाङ्क्षश्चेत्प्रयोक्ता । लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति । अभिजानासि देवदत्त ? कश्मीरेषु वत्स्यामः, तत्रौदनं भोक्ष्यामहे ? अभिजानासि देवदत्त ? मगधेषु वत्स्यामः, तत्रौदनं भोक्ष्यामहे ? यदि खल्वपि अभिजानासि देवदत्त ? यत्कश्मीरेषु वत्स्यामः, यत्तत्रौदनं भोक्ष्यामहे ? अभिजानासि देवदत्त ? यत्कश्मीरेष्ववसाम, यत्तत्रौदनमभुञ्ज्महि ? वासो लक्षणम्, भोजनं लक्ष्यम् ॥

## परोक्षे लिट् ॥ ११५ ॥

भूतानद्यतन इति वर्त्तते, तस्य विशेषणं परोक्षग्रहणम् । भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद्धातोर्लिट् प्रत्ययो भवति । ननु धात्वर्थः सर्वः (१) परोक्ष एव ? सत्यमेतत् , अस्ति तु लोके धात्वर्थेनापि कारकेषु प्रत्यक्षाभिमानः, स यत्र नास्ति तत्परोक्षमित्युच्यते । चकार । जहार । उत्तमविषयेऽपि चित्तव्याक्षेपात्(२) परोक्षता सम्भवत्येव । तद्यथा—सुप्तोऽहं किल विललाप । *अत्यन्तापह्नवे च लिड् वक्तव्यः* । कलिङ्गेषु स्थितोऽसि ? नाहं कलिङ्गान् जगाम । दक्षिणापथं प्रविष्टोऽसि ? नाहं दक्षिणापथं प्रविवेश ॥

## हशश्वतोर्लङ् च ॥ ११६ ॥

भूतानद्यतनपरोक्षेऽर्थे लिटि प्राप्ते हशश्वतोरुपपदयोर्लङ् प्रत्ययो भवति चकाराल्लिट् च । इति हाकरोत् , इति ह चकार । शश्वदकरोत् , शश्वच्चकार ॥

## प्रश्ने चासन्नकाले ॥ ११७ ॥

भूतानद्यतनपरोक्ष इति वर्त्तते । तस्य विशेषणमेतत् । प्रष्टव्यः प्रश्नः । आसन्न-

---

न यदि—यत् शब्द से विशिष्ट स्मृतिवाचक पद के उपपदत्व में लृट् प्रत्यय नहीं होता है ।

विभाषा—यच्छब्दसहित अथवा केवल स्मृतिवाचक शब्द के उपपद होने पर विकल्प से धातु से लृट् प्रत्यय होता है यदि लृडन्त पद का प्रयोग करनेवाला साकांक्ष हो ।

परोक्षे—परोक्ष अनद्यतन भूतार्थ में वर्त्तमान धातुओं से लिट् प्रत्यय होता है ।

अत्यन्तापह्नवे—अत्यन्त छल में भी धातु से लिट् प्रत्यय समझना चाहिए ।

हशश्वतोः—ह तथा शश्वत् के उपपद होने पर भूतानद्यतनपरोक्षार्थवृत्ती धातुओं से लङ् तथा लिट् दोनों ही प्रत्यय होते हैं ।

प्रश्ने—आसन्नकाल के प्रश्नविषय होने पर भूतानद्यतनपरोक्षार्थवृत्ती धातुओं से लङ् और लट् प्रत्यय होते हैं ।

---

(१) धात्वर्थः क्रिया, सा च परोक्षैव । तथा च भाष्यम्—'क्रिया नाम इयमत्यन्ताऽपरदृष्टा न शक्या पिण्डीभूता निदर्शयितुम्' इति । (श्रीना०)

(२) तथा च 'व्यातेने किरणावलीमुदयनः' इत्यादयः प्रयोगा असाधव एवेति ध्वनितम् । (श्रीना०)

काले पृच्छ्यमाने भूतानद्यतपरोक्षेऽर्थे वर्त्तमानाद्धातोर्लङ्लिटौ प्रत्ययौ भवतः। कश्चित् कञ्चित्पृच्छति—अगच्छद्देवदत्तः? अयजद्देवदत्तः? इयाज देवदत्तः? प्रश्न इति किम्। जगाम देवदत्तः। आसन्नकाल इति किम्? भवन्तं पृच्छामि, जघान कंसं किल वासुदेवः॥

## लट् स्मे ॥ ११८ ॥

भूतानद्यतनपरोक्ष इति वर्त्तते। स्मशब्द उपपदे भूतानद्यतनपरोक्षे लट् प्रत्ययो भवति। लिटोऽपवादः। नलेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते॥

## अपरोक्षे च ॥ ११९ ॥

अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्म उपपदे लट् प्रत्ययो भवति। एवं स्म पिता ब्रवीति। इति स्मोपाध्यायः कथयति॥

## ननौ पृष्टप्रतिवचने ॥ १२० ॥

अनद्यतने परोक्ष इति निवृत्तम्। भूतसामान्ये विधिरयम्। ननुशब्द उपपदे प्रश्न-पूर्वके प्रतिवचने भूतेऽर्थे लट् प्रत्ययो भवति। लुङोऽपवादः। अकार्षीः कटं देवदत्त? ननु करोमि भोः। अवोचस्तत्र किञ्चिद्देवदत्त? ननु ब्रवीमि भोः। पृष्टप्रतिवचन इति किम्? नन्वकार्षीन्माणवकः॥

## नन्वोर्विभाषा ॥ १२१ ॥

भूत इत्येव। नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति भूते। अकार्षीः कटं देवदत्त? न करोमि भोः। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्॥

## पुरि लुङ् चास्मे ॥ १२२ ॥

अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्त्तते। पुराशब्द उपपदे स्मशब्दवर्जिते भूतानद्य-तनेऽर्थे विभाषा लुङ् प्रत्ययो भवति लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति। वसन्तीह पुरा छात्राः। अवात्सुः पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषु-रिह पुरा छात्राः। अस्म इति किम्? नलेन स्म पुराधीयते॥

## वर्त्तमाने लट् ॥ १२३ ॥

आरब्धोऽपरिसमाप्तश्च वर्त्तमानः, तस्मिन् वर्त्तमानेऽर्थे वर्त्तमानाद्धातोर्लट् प्रत्ययो भवति। पचति। पठति॥

---

लट् स्मे—स्म शब्द के उपपद होने पर भूतानद्यतनपरोक्षार्थवृत्ती धातुओं से लट् प्रत्यय होता है।

अपरोक्षे—भूत अनद्यतन अपरोक्ष अर्थ में वर्त्तमान धातुओं से भी स्म शब्द के उपपद होने पर लट् प्रत्यय होता है।

ननौ—ननु शब्द के उपपद होने पर भूतकालिक प्रश्नपूर्वक प्रतिवचन अर्थ में धातु से लट् लकार होता है।

नन्वोर्विभाषा—भूतकालिक पृष्ट-प्रतिवचन अर्थ में न तथा नु के उपपद होने पर धातु से वैकल्पिक लट् प्रत्यय होता है।

पुरि—स्म-शब्दरहित पुरा शब्द के उपपद होने पर धातु से लुङ् प्रत्यय तथा लट् प्रत्यय भी होते हैं।

वर्त्तमाने—वर्त्तमानार्थ में धातु से लट् प्रत्यय होता है।

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥

लटः शतृशानचावित्येतावादेशौ भवतः अप्रथमान्तेन चेत्तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पश्य। पचता कृतम्। पचमानेन कृतम्। अप्रथमासमानाधिकरणे इति किम्? देवदत्तः पचति। लडिति वर्तमाने पुनर्लड्ग्रहण-मधिकविधानार्थम्; क्वचित् प्रथमासमानाधिकरणेऽपि भवति—सन् ब्राह्मणः, अस्ति ब्राह्मणः; विद्यते ब्राह्मणः, विद्यमानो ब्राह्मणः। जुह्वत्, जुहोति। अधीयानः, अधीते। ॐमाङ्याक्रोशेॐ। मा पचन्। मा पचमानः। केचिद् विभाषाग्रहणमनुवर्त्तयन्ति, "नन्वोर्विभाषा" इति। सा च व्यवस्थिता। तत्र यथादर्शनं प्रयोगा नेतव्याः॥

## सम्बोधने च ॥ १२५ ॥

प्रथमासमानाधिकरणार्थ आरम्भः। संबोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः। हे पचन्। हे पचमान॥

## लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥

लक्ष्यते चिह्न्यते येन तल्लक्षणम्। जनको हेतुः। धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ चार्थे वर्त्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेल्लक्षणहेतू क्रियाविषयौ भवतः। लक्षणे—शयाना भुञ्जते यवनाः, तिष्ठन्तोऽनुशासति गणकाः। हेतौ—अर्जयन् वसति, अधीयानो वसति। लक्षणहेत्वोरिति किम्? पचति, पठति। क्रियाया इति किम्? द्रव्यगुणयोर्मा भूत्—यः कम्पते सोऽश्वत्थः, यदुत्प्लवते तल्लघु, यन्निषीदति तद् गुरु। लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्॥

## तौ सत् ॥ १२७ ॥

तौ शतृशानचौ सत्संज्ञौ भवतः। तौ ग्रहणमुपाधयसंसर्गार्थम्। शतृशानज्मात्रस्य संज्ञा भवति। ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः। सत्प्रदेशाः—"पूरणगुणसुहितार्थसदव्ययतव्य" इत्येवमादयः॥

## पूङ्यजोः शानन् ॥ १२८ ॥

पूङो यजेश्च धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः। यदि प्रत्ययाः शानजादयो न लादेशाः, कथं सोमं पवमानो नडमाघ्नान इति षष्ठीप्रतिषेधः? तृन्निति प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः? "लटः शतृ" इत्यतः प्रभृति आ तृनो नकारात्। ॐद्विषः शतुर्वा वचनम्ॐ। चोरस्य द्विषन्। चोरं द्विषन्॥

---

लटः—अप्रथमान्तसमानाधिकरण लट् को शतृ तथा शानच् आदेश हो जाते हैं।

माङ्याक्रोशे—माङ् के उपपद रहने पर धातुविहित लट् को शतृ तथा शानच् आदेश होते हैं आक्रोश के गम्यमान होने पर।

सम्बोधने—सम्बोधनप्रथमान्तसमानाधिकरण लट् को भी शतृ तथा शानच् आदेश हो जाते है।

लक्षण—क्रियाविषयक लक्षण तथा हेतु अर्थ में वर्त्तमान धातुओं से विहित लट् को शतृ तथा शानच् आदेश हो जाते हैं।

तौ सत्—शतृ तथा शानच् की 'सत्' संज्ञा होती है।.

पूङ्यजोः—'पूङ्' तथा 'यज' धातुओं से शानन् प्रत्यय होता है।

द्विषः—'द्विषोऽमित्रे' सूत्र से विहित शतृ प्रत्यय के योग में विकल्प से षष्ठी विभक्ति होती है—यह समझना चाहिए।

## ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥

ताच्छील्यं तत्स्वभावता। वयः शरीरावस्था यौवनादिः। शक्तिः सामर्थ्यम्। ताच्छील्यादिषु धातोश्चानश् प्रत्ययो भवति। ताच्छील्ये तावत्-कतीह मुण्डयमानाः, कतीह भूषयमाणाः। वयोवचने-कतीह कवचं पर्यस्यमानाः, कतीह शिखण्डं वहमानाः। शक्तौ-कतीह निघ्नानाः, कतीह पचमानाः ॥

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

इङो धारेश्च धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्त्तरि। अकृच्छ्रः सुखसाध्यो यस्य कर्तुर्धात्वर्थः सोऽकृच्छ्री। अधीयन् पारायणम्। धारयन्नुपनिपदम्। अकृच्छ्रिणीति किम्? कृच्छ्रेणाधीते, कृच्छ्रेण धारयति ॥

## द्विषोऽमित्रे ॥ १३१ ॥

अमित्रः शत्रुः। अमित्रे कर्त्तरि द्विषेर्धातोः शतृप्रत्ययो भवति। द्विषन्, द्विषन्तौ, द्विषन्तः। अमित्र इति किम्? द्वेष्टि भार्या पतिम् ॥

## सुञो यज्ञसंयोगे ॥ १३२ ॥

यज्ञेन संयोगो यज्ञसंयोगः। यज्ञसंयुक्तेऽभिषवे वर्त्तमानात् सुनोतेर्धातोः शतृप्रत्ययो भवति। सर्वे सुन्वन्तः, सर्वे यजमानाः-सत्रिण उच्यन्ते। संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्, याजकेषु मा भूत्। यज्ञसंयोग इति किम्? सुनोति सुराम् ॥

## अर्हः प्रशंसायाम् ॥ १३३ ॥

प्रशंसा स्तुतिः। अर्हतेर्धातोः प्रशंसायां शतृप्रत्ययो भवति। अर्हन्निह भवान् विद्याम्। अर्हन्निह भवान् पूजाम्। प्रशंसायामिति किम्? अर्हति चौरो वधम् ॥

## आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥

"भ्राजभास" इति क्विपं वक्ष्यति। आ एतस्मात् क्विप्संशब्दाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायमाङ्, तेन क्विपोऽप्ययमर्थनिर्देशः। तदिति धात्वर्थः शीलादिविशेषणत्वेन निर्दिश्यते, तच्छीलो यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्त्तते, विनापि शीलेन तत्साधुकारी यो धात्वर्थं साधु करोति। उत्तरत्रैवोदाहरिष्यामः ॥

## तृन् ॥ १३५ ॥

सर्वधातुभ्यस्तृन् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। तकारः स्वरार्थः। तच्छीले तावत्-कर्ता कटान्, वदिता जनापवादान्। तद्धर्मणि-मुण्डयितारः श्राविष्ठायना भवन्ति

---

ताच्छील्य—ताच्छील्य, वयोवचन तथा शक्ति अर्थ में धातु से चानश् प्रत्यय होता है।

इङ्धार्योः—'इङ्' धातु तथा 'धारि' धातु से वर्त्तमान काल में शतृ प्रत्यय होता है यदि प्रत्ययान्तवाच्य कर्त्ता के लिए क्रिया कष्टसाध्य न हो।

द्विषोऽमित्रे—अमित्रकर्तृक 'द्विष' धातु से वर्त्तमान काल में शतृ प्रत्यय होता है।

सुञो—यज्ञसंयुक्त अभिषव अर्थ में वर्त्तमान 'सु' धातु से शतृ प्रत्यय होता है।

अर्हः—'अर्ह' धातु से प्रशंसा अर्थ में शतृप्रत्यय होता है।

आक्वेः—'भ्राजभास०' सूत्र से विहित क्विप् प्रत्यय तक जितने प्रत्यय कहे जायेंगे वे सब तच्छीलादि कर्त्ता के अर्थ में ही विहित होंगे।

तृन्—तच्छीलादि अर्थ में सब धातुओं से तृन् प्रत्यय होता है।

वधूसूढाम् , अन्नमपहर्त्ता आहरका भवन्ति श्राद्धे सिद्धे, उन्नेतारस्तौल्वलायना भवन्ति पुत्रे जाते। तत्साधुकारिणि-कर्त्ता कटम्, गन्ता खेटम् । ॐतृन्विधावृत्विक्षु चानुपसर्गस्यॐ। होता। पोता। अनुपसर्गस्येति किम्? उद्गाता, प्रतिहर्त्ता—तृजेव भवति। स्वरे विशेषः। ॐनयतेः पुक् चॐ। नेष्टा। ॐत्विषेर्देवतानामकारश्चोपधाया अनिट्त्वं चॐ। त्वष्टा। ॐक्षदेश्च नियुक्तेॐ। क्षत्ता। क्वचिदधिकृत उच्यते। ॐछन्दसि तृचॐ। क्षत्तृभ्यः संग्रहीतृभ्यः। स्वरे विशेषः ॥

## अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ १३६ ॥

अलंकृञादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलंकरिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्त्तिष्णुः। वर्द्धिष्णुः। सहिष्णुः। चरिष्णुः(१)। ॐअलंकृञो मण्डनार्थाद्युचः(२) पूर्वविप्रतिषेधेनेष्णुज्वक्तव्यःॐ ॥

## णेश्छन्दसि ॥ १३७ ॥

ण्यन्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। दृषदं धारयिष्णवः। वीरुधः पारयिष्णवः ॥

## भुवश्च ॥ १३८ ॥

भवतेर्धातोश्छन्दसि विषये तच्छीलादिष्विष्णुच् प्रत्ययो भवति। भविष्णुः। योगविभाग उत्तरार्थः। चकारोऽनुक्तसमुच्चयार्थः—भ्राजिष्णुना लोहितचन्दनेन ॥

## ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥

छन्दसीति निवृत्तम्। ग्ला, जि, स्था इत्येतेभ्यो धातुभ्यश्चकाराद् भुवश्च तच्छीलादिषु क्स्नुः प्रत्ययो भवति। ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः। गिच्चायं प्रत्ययो न कित्, तेन स्थ ईकारो न भवति। "क्ङिति च" इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन

तृन्विधौ—ऋत्विगर्थ में भी अनुपसर्गक धातु से तृन् प्रत्यय होता है।

नयतेः—'नि' धातु से तृन् प्रत्यय तथा उसे वुक् का आगम भी हो जाता है।

त्विषेर्देवता—'त्विष' धातु से देवता के अभिधेय होने पर तृन् प्रत्यय होता है तथा उपधा को अकारादेश भी हो जाता है।

क्षदेश्च—'क्षद' धातु से अधिकृत अर्थ में तृन् प्रत्यय होता है।

छन्दसि—वेद में 'क्षद' धातु से अधिकृत अर्थ में तृच् प्रत्यय भी होता है।

अलंकृञ्—'अलंकृञ्', 'निराकृञ्' आदि धातुओं से तच्छील आदि अर्थों में इष्णुच् प्रत्यय होता है।

अलंकृञो—मण्डनार्थक 'अलंकृञ्' धातु से युच् के स्थान में पूर्वविप्रतिषेध से इष्णुच् प्रत्यय समझना चाहिए।

णेश्छन्दसि—ण्यन्त धातु से तच्छीलादि अर्थ में इष्णुच् प्रत्यय होता है वेद में।

भुवश्च—'भू' धातु से भी छन्दोविषय में तच्छीलादि अर्थ में इष्णुच् प्रत्यय होता है।

ग्लाजि—'ग्लै', 'जि', 'स्था' तथा 'भू' धातुओं से तच्छीलादि अर्थों में क्स्नु प्रत्यय होता है।

(१) अत्र चरेः सोपसर्गादपि इष्णुज् विधीयते इति प्रतीयते। तथा च माघः—स सञ्चरिष्णुर्भुवनान्तरेषु याम् इति। प्रत्ययान्तेन वा समासः। (श्रीना०)।

(२) इदं वार्त्तिकं क्वचिदेव दृश्यते।

गुणो न भवति। "श्नुः किति" इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति।

क्स्नोर्गित्वान्न स्थ ईकारः क्ङिन्तोरीत्वशासनात्।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः॥

॥दंशेश्छन्दस्युपसंख्यानम्॥। दंक्ष्णवः पशवः॥

## त्रसिगृधिधृषिक्षिपेः क्नुः॥ १४०॥

त्रसादिभ्यो धातुभ्यस्तच्छीलादिषु क्नुः प्रत्ययो भवति। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः॥

## शमित्यष्टाभ्यो घिनुण्॥ १४१॥

इति शब्द आद्यर्थे। शमादिभ्यो धातुभ्योऽष्टाभ्यस्तच्छीलादिषु घिनुण् प्रत्ययो भवति। 'शम उपशमे' इत्यतः प्रभृति 'मदी हर्षे' इत्येवमन्तः शमादिर्दिवाद्यन्तर्गणः। घकार उत्तरत्र कुत्वार्थः। उकार उच्चारणार्थः। णकारो वृद्ध्यर्थः। शमी। तमी। दमी। श्रमी। भ्रमी। क्लमी। प्रमादी। उन्मादी। अष्टाभ्य इति किम्? असिता॥

## संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च॥ १४२॥

घिनुणनुवर्त्तते। सम्पृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादिषु। 'पृची संपर्के' इति रुधादिर्गृह्यते न स्वदादिः, लुग्विकरणत्वात्। परिदेविर्भ्वादिर्गृह्यते—'देवृ देवने' इति। 'क्षिप प्रेरणे' दिवादिस्तुदादिश्च सामान्येन गृह्यते। 'युज समाधौ' दिवादिः, 'युजिर् योगे' रुधादिः, द्वयोरपि ग्रहणम्। 'रञ्ज रागे' इत्यस्य निपातनादनुनासिकलोपः। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती॥

## वौ कषलसकत्थस्रम्भः॥ १४३॥

'कष हिंसार्थः', 'लस श्लेषणक्रीडनयोः', 'कत्थ श्लाघायाम्', 'स्रम्भु विश्वासे', इत्येतेभ्यो धातुभ्यो विशब्द उपपदे घिनुण् प्रत्ययो भवति। विकाषी। विलासी। विकत्थी। विस्रम्भी॥

## अपे च लषः॥ १४४॥

'लष कान्तौ' अस्माद्धातोरप उपपदे चकाराद् वौ च घिनुण् भवति। अपलाषी। विलाषी॥

---

दंशेः—'दंश' धातु से छन्दोविषय में क्स्नु प्रत्यय समझना चाहिए।

त्रसि—'त्रस', 'गृध', 'धृष' एवम् 'क्षिप' धातुओं से तच्छीलादि अर्थों में क्नु प्रत्यय होता है।

शमित्यष्टाभ्यो—'शम' आदि आठ धातुओं से तच्छीलादि अर्थों में घिनुण् प्रत्यय होता है।

सम्पृचानु—'सम्पृच्', 'अनुरुध्' आदि धातुओं से तच्छीलादि अर्थों में घिनुण् प्रत्यय होता है।

वौ कष—वि उपसर्ग से विशिष्ट 'कष', 'लस', 'कत्थ' तथा 'स्रम्भु' धातुओं से तच्छीलादि अर्थों में घिनुण् प्रत्यय होता है।

अपे—अपोपपदक तथा व्युपपदक 'लष' धातु से भी तच्छीलादि अर्थों में घिनुण् प्रत्यय होता है।

## प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥

प्र उपपदे लपादिभ्यो घिनुण् भवति। प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। वस इति 'वस निवासे' इत्यस्य ग्रहणम्, नाच्छादनार्थस्य, लुग्विकरणत्वात् ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ १४६ ॥

निन्दादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु वुञ् प्रत्ययो भवति। पञ्चम्यर्थे प्रथमा। 'क्लिश उपतापे', 'क्लिश विबाधने' द्वयोरपि ग्रहणम्। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। असूयकः। ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम्—ताच्छीलिकेषु वासरूपन्यायेन तृजादयो न भवन्तीति ॥

## देविक्रुशोश्चोपसर्गे ॥ १४७ ॥

देवयतेः क्रुशेश्चोपसर्गे उपपदे वुञ् प्रत्ययो भवति। आदेवकः। परिदेवकः। आक्रोशकः। परिक्रोशकः। उपसर्ग इति किम्? देवयिता, क्रोष्टा ॥

## चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥

चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु युच् प्रत्ययो भवति। चलनः। चोपनः। शब्दार्थेभ्यः—शब्दनः, रवणः। अकर्मकादिति किम्? पठिता विद्याम् ॥

## अनुदात्तेतश्च हलादेः ॥ १४९ ॥

अनुदात्तेद्यो धातुर्हलादिरकर्मकः ततश्च युच् प्रत्ययो भवति। वर्त्तनः। वर्द्धनः। अनुदात्तेत इति किम्? भविता। हलादेरिति किम्? एधिता। आदिग्रहणं किम्? जुगुप्सनः, मीमांसनः। अकर्मकादित्येव—वसिता वस्त्रम् ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥

जुप्रभृतिभ्यो धातुभ्यो युच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जु इति सौत्रो धातुः। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। गर्द्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः। चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थमिह, ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति—

---

प्रे लप—प्रोपसर्गक 'लप', 'सृ', 'द्रु', 'मन्थ', 'वद' तथा 'वस' धातुओं से घिनुण् प्रत्यय होता है।

निन्दहिंस—'निन्द', 'हिंस', 'क्लिश', 'खाद', व्युपसर्गक ण्यन्त 'नश', पर्युपसर्गक 'क्षिप', पर्युपसर्गक 'रट', पर्युपसर्गक ण्यन्त 'वद', व्याङुपसर्गक 'भाष' तथा 'असूय' धातुओं से तच्छीलादि अर्थों में वुञ् प्रत्यय होता है।

देवि—उपसर्गविशिष्ट ण्यन्त 'दिव्' तथा 'क्रुश' धातुओं से वुञ् प्रत्यय होता है।

चलन—अकर्मक चलनार्थक तथा शब्दार्थक धातुओं से तच्छीलादि अर्थों में युच् प्रत्यय होता है ॥

अनुदात्तेतश्च—हलादि अकर्मक अनुदात्तेत् धातु से भी युच् प्रत्यय होता है।

जुचङ्क्रम्य—'जु', यङन्त 'क्रम', यङन्त 'द्रम', 'सृ', 'गृध', 'ज्वल', 'शुच', 'लष', 'पत' तथा 'पद' धातुओं से तच्छीलादि अर्थों में युच् प्रत्यय होता है।

ताच्छीलिकेषु मिथो वासरूपविधिर्नास्तीति, तेनालंकृञस्तृन्न भवति—अलङ्कर्त्तेति। तथाहि—पदेरुकञा विशेषविहितेन सामान्यविहितस्य युचोऽसरूपत्वात्समावेशो भवेदेव, किमनेन विधानेन ? ज्ञापनार्थं पुनर्विधीयते, प्रायिकं चैतज्ज्ञापनम्। क्वचित्समावेश इष्यत एव-गन्ता खेटं विकत्थनः॥

## क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥

'क्रुध कोपे', 'मडि भूषायाम्' इत्येतदर्थेभ्यश्च धातुभ्यो युच् प्रत्ययो भवति। क्रोधनः। रोषणः। मण्डनः। भूषणः॥

## न यः ॥ १५२ ॥

यकारान्ताद्धातोर्युच् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिद्ध्यते। क्नूयिता। क्ष्मायिता॥

## सूददीपदीक्षश्च ॥ १५३ ॥

सूद, दीप, दीक्ष इत्येतेभ्यश्च युच् प्रत्ययो न भवति। अनुदात्तेत्त्वात्प्राप्तः प्रतिषिद्ध्यते। सूदिता। दीपिता। दीक्षिता। ननु च दीपेर्विशेषविहितो रप्रत्ययो दृश्यते-"नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति, स एव बाधको भविष्यति किं प्रतिषेधेन ? वासरूपेण युजपि प्राप्नोति। ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकमेतदित्युक्तम्। तथा च समावेशो दृश्यते—कम्रा युवतिः, कमना युवतिः, कम्प्रा शाखा, कम्पना शाखेति। सूदेर्युचि प्रतिषिद्धे कथं मधुसूदनो रिपुसूदन इति ? अनित्योऽयं प्रतिषेध इति योगविभागाद्विज्ञायते, अथवा मधुसूदनादयो नन्द्यादिषु द्रष्टव्यन्ते॥

## लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ १५४ ॥

लषादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। अपलाषुकं वृषलसंगतम्। प्रपातुका गर्भा भवन्ति। उपपादुकं सत्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आघातुकं कापालिकस्य शूलम्। कामुका एनं स्त्रियो भवन्ति। आगामुकं वाराणसीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः॥

## जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५५ ॥

जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥

## प्रजोरिनिः ॥ १५६ ॥

प्रपूर्वाज्जवतेस्तच्छीलादिषु कर्तृषु इनिप्रत्ययो भवति। प्रजवी। प्रजविनौ॥

## जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥

'जि जये', 'दृङ् आदरे', 'क्षि क्षये', 'क्षि निवासगत्योः' इति द्वयोरपि ग्रहणम्। प्रसू

---

क्रुध—क्रोधार्थक तथा भूषणार्थक धातुओं से भी युच् प्रत्यय होता है।

न यः—यकारान्त धातुओं से युच् प्रत्यय नहीं होता है।

सूददीप—'सूद', 'दीप' तथा 'दीक्ष' धातुओं से भी युच् प्रत्यय नहीं होता है।

लषपतपद—'लष', 'पत', 'पद' आदि धातुओं से उकञ् प्रत्यय होता है।

जल्पभिक्ष—'जल्प', 'भिक्ष', 'कुट्ट', 'लुण्ट' तथा 'वृङ्' धातुओं से षाकन् प्रत्यय होता है।

प्रजोरिनिः—प्रपूर्वक 'जु' धातु से तच्छीलादि अर्थों में इनि प्रत्यय होता है।

जिदृक्षि—'जि', 'दृङ्', 'क्षि', विपूर्वक 'श्रिञ्', 'इण्', 'वम', नञ्पूर्वक 'व्यथ', अभिपूर्वक

इति– 'पू प्रेरणे' इत्यस्य ग्रहणम्। जिप्रभृतिभ्यो धातुभ्य इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्ययी। अभ्यमी। परिभवी। प्रसवी॥

## स्पृहिगृहिपतिदयिनिद्रायन्द्राश्रद्धाभ्य आलुच्॥ १५८॥

'स्पृह ईप्सायाम्', 'गृह ग्रहणे', 'पत गतौ', चुरादावदन्ताः पठ्यन्ते, 'दय दानगतिरक्षणेषु', 'द्रा कुत्सायां गतौ', निपूर्वस्तत्पूर्वश्च; 'तदो नकारान्तता च निपात्यते, डुधाञ् श्रत्पूर्वः इत्येतेभ्यस्तच्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तन्द्रालुः। श्रद्धालुः॥ ॐआलुचि शीङो ग्रहणं कर्तव्यम्ॐ। शयालुः॥

## दाधेट्सिशदसदो रुः॥ १५९॥

दा, धेट्, सि, शद, सद् इत्येतेभ्यो रुः प्रत्ययो भवति। दारुः। धारुर्वत्सो मातरम्। "न लोकाव्यय" इत्युकारप्रश्लेपात् षष्ठी न भवति। सेरुः। शद्रुः। सद्रुः॥

## सृघस्यदः क्मरच्॥ १६०॥

सृ, घसि, अद् इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति। सृमरः। घस्मरः। अद्मरः॥

## भञ्जभासमिदो घुरच्॥ १६१॥

भञ्ज, भास, मिद इत्येतेभ्यो घुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। भङ्गुरं काष्ठम्। घित्वात् कुत्वम्। भासुरं ज्योतिः। मेदुरः पशुः। भञ्जेः कर्मकर्त्तरि प्रत्ययः, स्वभावात्॥

## विदिभिदिच्छिदेः कुरच्॥ १६२॥

ज्ञानार्थस्य विदेर्ग्रहणं न लाभाद्यर्थस्य, स्वभावात्। विदादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति। विदुरः पाण्डुरः। भिदुरं काष्ठम्। छिदुरा रज्जुः। भिदिच्छिद्योः कर्मकर्त्तरि प्रयोगः। ॐव्यधेः सम्प्रसारणं कुरच वक्तव्यःॐ विधुरः(१)॥

## इण्नश्जिसर्त्तिभ्यः क्वरप्॥ १६३॥

इण्, नश्, जि, सर्त्ति इत्येतेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति।

---

'अम', परिपूर्वक 'भू' तथा प्रपूर्वक 'सू' धातुओं से तच्छीलादि अर्थों में इनि प्रत्यय होता है।

स्पृहि—'स्पृह', 'गृह' आदि धातुओं से तच्छीलादि अर्थों में आलुच् प्रत्यय होता है।

आलुचि—'शीङ्' धातु से भी आलुच् प्रत्यय समझना चाहिए।

दाधेट्—'दा', 'धेट्', 'सि', 'शद' तथा 'सद्' धातुओं से रु प्रत्यय होता है।

सृघस्यदः—'सृ', 'घस' तथा 'अद' धातुओं से तच्छीलादि अर्थों में क्मरच् प्रत्यय होता है।

भञ्ज—'भञ्ज' 'भास' तथा 'मिद' धातुओं से तच्छीलादि अर्थों में घुरच् प्रत्यय होता है।

विदि—(ज्ञानार्थक) 'विद', 'भिद' तथा 'छिद' धातुओं से तच्छीलादि अर्थों में कुरच् प्रत्यय होता है।

व्यधेः—'व्यध' धातु से कुरच् प्रत्यय तथा सम्प्रसारण भी समझना चाहिए।

इण्नश्—'इण्', 'नश', 'जि' तथा 'सृ' धातुओं से तच्छीलादि अर्थों में क्वरप् प्रत्यय होता है।

---

(१) प्रायो वार्तिकमेतद्, तस्योदाहरणं तु नोपलभ्यते।

पकारस्तुगर्थः। इत्वरः। इत्वरी। नश्वरः। नश्वरी। जित्वरः। जित्वरी। सृत्वरः। सृत्वरी। "नेड्वशि कृति" इतीट्प्रतिषेधः॥

## गत्वरश्च ॥ १६४ ॥

गत्वर इति निपात्यते। गमेरनुनासिकलोपः क्वरप् प्रत्ययश्च। गत्वरः, गत्वरी॥

## जागरूकः ॥ १६५ ॥

जागर्त्तरूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जागरूकः॥

## यजजपदशां यङः ॥ १६६ ॥

यजादीनां यङन्तानामूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। यायजूकः। जञ्जपूकः। दन्दशूकः॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६७ ॥

नम्यादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति। नम्रं काष्ठम्। कम्प्रा शाखा। स्मेरं मुखम्। अजस्रं जुहोति। कम्रा युवतिः। हिंस्रं रक्षः। दीप्रं काष्ठम्। अजस्रमिति 'जसु मोक्षणे' नञ्पूर्वो रप्रत्ययान्तः क्रियासातत्ये वर्त्तते॥

## सनाशंसभिक्ष उः ॥ १६८ ॥

सन्निति सन्प्रत्ययान्तो गृह्यते, न सनिर्धातुः, अनभिधानाद्व्याप्तिन्यायाद्वा(१)। सन्नन्तेभ्यो धातुभ्य आशंसेर्भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति। चिकीर्षुः। आशंसुः। भिक्षुः। 'आङः शसि इच्छायाम्' इत्यस्य ग्रहणम्, न शंसेः स्तुत्यर्थस्य॥

## विन्दुरिच्छुः ॥ १६९ ॥

विदेर्नुमागम इषेश्छत्वमुकारश्च प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु। वेदनशीलो विन्दुः। एषणशील इच्छुः॥

## क्याच्छन्दसि ॥ १७० ॥

क्य इति क्यच्क्यङ्क्यषां सामान्येन ग्रहणम्। क्यप्रत्ययान्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। मित्रयुः। संस्वेदयुः। सुम्नयुः। छन्दसीति

---

गत्वरश्च—'गम्' धातु से क्वरप् प्रत्यय तथा अनुनासिक का लोप हो जाता है।

जागरूकः—'जागृ' धातु से तच्छीलादि अर्थों में ऊक प्रत्यय होता है।

यजजप—'यङन्त 'यज', 'जप', 'दंश' धातुओं से तच्छीलादि अर्थों में ऊक प्रत्यय होता है।

नमिकम्पि—'नमि', 'कम्पि' आदि धातुओं से तच्छीलादि अर्थों में र प्रत्यय होता है।

सनाशंस—सन्प्रत्ययान्त, आङ्पूर्वक 'शंस' तथा 'भिक्ष' धातुओं से उ प्रत्यय होता है।

विन्दुः—'विद' धातु से उ प्रत्यय तथा नुमागम का और 'इष' धातु से उ प्रत्यय तथा ष के स्थान में छ आदेश का निपातन है।

क्याच्छन्दसि—क्यजन्त, क्यङन्त तथा क्यषन्त धातुओं से तच्छीलादि अर्थों में उ प्रत्यय होता है छन्दोविषय में।

---

(१) अल्पेन यत्नेन महतो महतः शब्दसमूहस्य सङ्ग्रह एव व्याप्तिन्यायेनाभिधीयते। सन्प्रत्ययान्तग्रहणे तदन्तानां धातूनां समावेशः, पणधातुग्रहणे तु एकस्यैव धातोरिति अनेकलक्ष्यसंग्राहकतया व्याकरणस्य प्रत्यान्तग्रहणमेव युक्तम् इति आशयः। व्याप्तिन्यायस्यैतादृशस्वरूपत्वं च एकाचो द्वे इति सूत्रे प्रदीपोद्योतयोः स्पष्टम्। (श्रीना०)

किम्? मित्रीयिता। "न च्छन्दस्यपुत्रस्य" इति प्रतिषेधान्न दीर्घः(१)॥

## आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥

अकारान्तेभ्यः, ऋवर्णान्तेभ्यश्च, गम, हन, जन इत्येतेभ्यश्छन्दसि विषये तच्छीलादिषु किकिनौ प्रत्ययौ भवतः, लिड्वच्च तौ भवतः। आदिति दकारो मुखसुखार्थः, न त्वयं तपरः। मा भूत्तादपि परस्तपर इति ऋकारे तत्कालग्रहणम्। पपिः सोमम्। ददिर्गाः। मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः। जग्मिर्युवा। जघ्निर्वृत्रम्। जज्ञिर्बीजम्। अथ किमर्थं कित्वम्, यावता "असंयोगाल्लिट् कित्" इति कित्वं सिद्धमेव? "ऋच्छत्यॄताम्" इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्यापि बाधनार्थं कित्वम्। ॐकिकिनावुत्सर्गः, छन्दसि सदादिभ्यो दर्शनात्ॐ। सेदिः। नेमिः। ॐभाषायां धाञ्कृञ्सृजनिगमिभ्यः किकिनौ वक्तव्यौॐ। दधिः। चक्रिः। सस्रिः। जज्ञिः। जग्मिः। नेमिः। ॐसहिवहिचलिपलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौॐ। "दीर्घोऽकितः"। सासहिः। वावहिः। चाचलिः। पापतिः॥

## स्वपितृषोर्नजिङ् ॥ १७२ ॥

छन्दसीति निवृत्तम्। स्वपेस्तृषेश्च तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययो भवति। स्वप्नक्। तृष्णक्। ॐधृषेश्चेति वक्तव्यम्ॐ। धृष्णक्॥

## शॄवन्द्योरारुः ॥ १७३ ॥

'शॄ हिंसायाम्,' 'वदि अभिवादनस्तुत्योः' इत्येताभ्यां धातुभ्यां तच्छीलादिषु कर्तृष्वारुः प्रत्ययो भवति। शरारुः। वन्दारुः॥

## भियः क्रुक्लुकनौ ॥ १७४ ॥

'ञिभी' भये। अस्माद्धातोः तच्छीलादिषु कर्तृषु क्रुक्लुकनौ प्रत्ययौ भवतः। भीरुः। भीलुकः। ॐक्रुकन्नपि वक्तव्यःॐ भीरुकः॥

---

आदृगम—आकारान्त, ऋवर्णान्त, 'गम्', 'हन', तथा 'जन्' धातुओं से तच्छीलादि अर्थों में कि तथा किन् प्रत्यय होते हैं वेद में और दोनों ही प्रत्ययों को लिड्वद्भाव हो जाता है।

किकिनावुत्सर्गः—परन्तु उक्त धातुओं से ही कि तथा किन् प्रत्यय का विधान औत्सर्गिक है, क्योंकि 'सद' आदि धातुओं से भी वेद में कि तथा किन् प्रत्यय देखे जाते हैं।

भाषायाम्—भाषा में भी 'धाञ्', 'कृञ्', 'सृ', 'जन्', 'गम्' तथा 'नम्' धातुओं से कि तथा किन् प्रत्यय अवगन्तव्य हैं।

सहिवहि—'सह', 'वह', 'चल' 'पल' तथा 'पत' धातुओं से भी यङ् प्रत्यय होने पर कि तथा किन् प्रत्यय होते हैं।

स्वपि—'स्वप्' तथा 'तृष' धातुओं से तच्छीलादि अर्थों में नजिङ् प्रत्यय होता है।

धृषेश्चेति—'धृष' धातु से भी नजिङ् प्रत्यय समझना चाहिए।

शॄवन्द्योः—'शॄ' तथा 'वन्दि' धातुओं से तच्छीलादि अर्थों में आरु प्रत्यय होता है।

भियः—'भी' धातु से तच्छीलादि अर्थों में क्रुक् तथा लुकन् प्रत्यय होते हैं।

क्रुकन्नपि—क्रुकन् प्रत्यय का भी विधान करना चाहिए।

---

(१) छन्दसीत्यादिः दीर्घपर्यन्तः पाठो बहुषु नोपलभ्यते।

## स्थेशभासपिसकसो वरच् ॥ १७५ ॥

'ष्ठा गतिनिवृत्तौ', 'ईश ऐश्वर्ये', 'भासृ दीप्तौ', 'पिसृ पेसृ गतौ', 'कस गतौ', इत्येतेभ्यस्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ॥

## यश्च यङः ॥ १७६ ॥

'या प्रापणे' । अस्माद्यङन्तात्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति । यायावरः ॥

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७७ ॥

भ्राजादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो भवति । विभ्राट् । विभ्राजौ । विभ्राजः । भाः । भासौ । भासः । धूः । धुरौ । धुरः । विद्युत् । विद्युतौ । विद्युतः । ऊर्क् । ऊर्जौ । ऊर्जः । पूः । पुरौ । पुरः । जवतेर्दीर्घश्च निपात्यते । जूः । जुवौ । जुवः । ग्रावस्तुत् । ग्रावस्तुतौ । ग्रावस्तुतः । किमर्थमिदमुच्यते, यावताऽन्येभ्योपि दृश्यन्ते, "क्विप् च" इति क्विप्सिद्ध एव ? ताच्छीलिकैर्बाध्यते, वासरूपविधिर्नास्तीत्युक्तम् । अथ तु प्रायिकमेतत्, ततस्तस्यैवायं प्रपञ्चः ॥

## अन्येभ्योऽपि दृश्यते ॥ १७८ ॥

अन्येभ्योऽपि धातुभ्यस्ताच्छीलिकेषु क्विप् प्रत्ययो दृश्यते । युक् । छित् । भित् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः । क्वचिद्द्विर्वचनम् । क्वचित्संप्रसारणम् । तथा चाह-*क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च* ॥ वचि-वाक् । प्रच्छि—शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । जुग्रहणेनात्र नार्थः, भ्राजादिसूत्र एव गृहीतत्वात् । *द्युतिगमिजुहोतीनां द्वे च* । दिद्युत् । जगत् । *जुहोतेर्दीर्घश्च* । जुहूः । *दृ भय इत्यस्य ह्रस्वश्च द्वे च* । दद्दत् । *ध्यायतेः संप्रसारणं च* । धीः ॥

## भुवः संज्ञान्तरयोः ॥ १७९ ॥

(१) भवतेर्धातोः संज्ञायामन्तरे च गम्यमाने क्विप् प्रत्ययो भवति । विभूर्नाम (२) कश्चित् । अन्तरे—प्रतिभूः । धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूरुच्यते ॥

---

स्थेश—'स्था', 'ईश', 'भास्', 'पिस्' तथा 'कस' धातुओं से तच्छीलादि अर्थों में वरच् प्रत्यय होता है ।

यश्च—यङन्त 'या' धातु से भी वरच् प्रत्यय होता है ।

भ्राजभास—'भ्राज्', 'भास्' आदि धातुओं से तच्छीलादि अर्थों में क्विप् प्रत्यय होता है ।

अन्येभ्योऽपि—अन्य धातुओं से भी तच्छीलादि अर्थों में क्विप् प्रत्यय होता है ।

क्विब्वचि—'वच्', 'प्रच्छ्', आयतोपपदक 'स्तु', कटोपपदक 'प्रु', 'जु' तथा 'श्रि' धातुओं से भी क्विप् प्रत्यय, दीर्घ तथा यथासम्भव सम्प्रसारणाभाव भी अवगन्तव्य हैं ।

द्युति—'द्युत', 'गम्' तथा 'हु' धातुओं को द्वित्व भी समझना चाहिए ।

जुहोतेः—'हु' धातु को दीर्घ भी होता है—ऐसा समझना चाहिए ।

दृ भये—भयार्थक 'दृ' धातु को ह्रस्व भी होता है और द्वित्व भी—यह अवगन्तव्य है ।

ध्यायतेः—'ध्यै' धातु को सम्प्रसारण भी समझना चाहिए ।

भुवः—'भू' धातु से क्विप् प्रत्यय होता है संज्ञा तथा अन्तर अर्थों के गम्यमान होने पर ।

---

(१) अत्र तच्छीलादिषु कर्तृष्विति निवृत्तमिति सूत्रव्याख्या प्रथमत एवोपलभ्यते क्वचित् ।

(२) मित्रभूः इति पाठान्तरम् ।

## विप्रसंभ्यो ड्वसंज्ञायाम् ॥ १८० ॥

भुव इति वर्त्तते । वि, प्र, सम् इत्येवंपूर्वाद्भवतेर्धातोर्डुप्रत्ययो भवति, न चेत् संज्ञा गम्यते । विभुः सर्वगतः । प्रभुः स्वामी । संभुर्जनिता । असंज्ञायामिति किम् ? विभूर्नाम कश्चित् । ॐडुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्ॐ । मितं द्रवति मितद्रुः । शंभुः ॥

## धः कर्मणि ष्ट्रन् ॥ १८१ ॥

धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् प्रत्ययो भवति । षकारो ङीपर्थः । धयन्ति तां दधति वा भैषज्यार्थमिति धात्री । स्तनदायिनी आमलकी चोच्यते ॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ १८२ ॥

'दाप् लवने', 'णीञ् प्रापणे', 'शसु हिंसायाम्'(१), 'यु मिश्रणे', 'युजिर् योगे', 'ष्टुञ् स्तुतौ', 'तुद व्यथने', 'षिञ् बन्धने', 'षिचिर् क्षरणे', 'मिह सेचने', 'पत्लृ गतौ', 'दंश दशने', 'णह बन्धने' इत्येतेभ्यो धातुभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवति । दान्त्यनेनेति दात्रम् । नेत्रम् । शस्त्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । अजादित्वात् टाप् , न ङीप् । दंशेरनुनासिकलोपेन निर्देशो ज्ञापनार्थः— ङित्तोऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद्भवतीति । तेन ल्युट्यपि भवति—दशनम् , नद्ध्री ॥

## हलसूकरयोः पुवः ॥ १८३ ॥

पू इति पूङ्पूञोस्सामान्येन ग्रहणम् । अस्माद्धातोः करणे कारणे ष्ट्रन् प्रत्ययो भवति, तच्चेत्करणं हलसूकरयोरवयवो भवति । हलस्य पोत्रम् । सूकरस्य पोत्रम् । मुखमुच्यते ॥

## अर्तिलूधूसूखनसहचर इत्रः ॥ १८४ ॥

'ऋ गतौ', 'लूञ् छेदने', 'धू विधूनने', 'षू प्रेरणे', 'खनु अवदारणे', 'षह मर्षणे', 'चर गतिभक्षणयोः' इत्येतेभ्यो धातुभ्यः करणे कारके इत्रप्रत्ययो भवति । अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

## पुवः संज्ञायाम् ॥ १८५ ॥

पूङ्पूञोः सामान्येन ग्रहणम् । पवतेर्धातोः करणे कारके इत्रप्रत्ययो भवति समु-

---

विप्रसम्—वि, प्र तथा सम् उपसर्गों से विशिष्ट 'भू' धातु से डु प्रत्यय होता है यदि संज्ञा की प्रतीति समुदाय से न होती हो ।

डुप्रकरणे—मितोपपदक 'द्रु' धातु से भी डु प्रत्यय का प्रतिपादन करना चाहिए ।

धः कर्मणि—'धेट्' तथा 'धाञ्' धातुओं से कर्मकारक में ष्ट्रन् प्रत्यय होता है ।

दाम्नीशस—'दाप्', 'नी', 'शस्', 'युज', 'स्तु', 'तुद', 'सि', 'सिच्', 'मिह', 'पत', 'पद', 'दंश' तथा 'नह' धातुओं से करणार्थ में ष्ट्रन् प्रत्यय होता है ।

हल—'पू' तथा 'पूङ्' धातुओं से हलावयवात्मक तथा सूकरावयवात्मक करणकारकार्थ में ष्ट्रन् प्रत्यय होता है ।

अर्ति—'ऋ', 'लूञ्', 'धू', 'षू' ( सू ), 'खन्', 'सह' तथा 'चर' धातुओं से करणकारकार्थ में इत्र प्रत्यय होता है ।

पुवः—'पूङ्' तथा 'पूञ्' धातुओं से इत्र प्रत्यय होता है यदि प्रत्ययान्त से संज्ञा की प्रतीति होती हो ।

---

( १ ) क्वचित् शसु हिंसायाम्,शंसु स्तुतौ चेति द्वयोरपि ग्रहणम् इत्युपलभ्यते ।

दायेन चेत्संज्ञा गम्यते। दर्भः पवित्रम्। बर्हिष्पवित्रम्॥

## कर्त्तरि चर्षिदेवतयोः॥ १८६॥

पुव इति वर्त्तते। पुवः करणे कर्त्तरि च इत्रप्रत्ययो भवति। ऋषिदेवतयोर्यथासंख्यं सम्बन्धः, ऋषौ करणे देवतायां कर्त्तरि। पूयतेऽनेनेति पवित्रोऽयमृषिः। देवतायाम्—अग्निः पवित्रं स मा पुनातु; वायुः सोमः सूर्य इन्द्रः पवित्रम्, ते मा पुनन्तु॥

## ञीतः क्तः॥ १८७॥

ञि इत्यस्यासौ ञीत्। ञीतो धातोर्वर्त्तमानेऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता वर्त्तमाने न प्राप्नोतीति विधीयते। 'ञिमिदा स्नेहने'-भिन्नः। ञिक्ष्विदा—क्ष्विण्णः। ञिधृषा—धृष्टः॥

## मतिबुद्धिपूजार्थेभ्यश्च॥ १८८॥

मतिरिच्छा, बुद्धिर्ज्ञानम्, पूजा सत्कारः, इत्येतदर्थेभ्यश्च धातुभ्यो वर्त्तमानार्थे क्तप्रत्ययो भवति। राज्ञां मतः। राज्ञामिष्टः। राज्ञां बुद्धः। राज्ञां ज्ञातः। राज्ञां पूजितः। राज्ञामर्चितः। अनुक्तसमुच्चयार्थश्चकारः—

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि। रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि॥

हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ। कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः॥

कष्ट इति भविष्यति काले। अमृत इति पूर्ववत्। वर्त्तमान इत्यर्थः। तथा—सुप्तः(१), शयितः, आशितः, लिप्तः, तृप्तः इत्येवमादयोऽपि वर्त्तमाने द्रष्टव्याः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
तृतीयाध्यायस्य द्वितीयः पादः॥३॥२॥

---

कर्त्तरि—'पूङ्' तथा 'पूञ्' धातुओं से ऋष्यात्मक करणकारकार्थ में तथा देवतात्मक कर्त्तृकारकार्थ में इत्र प्रत्यय होता है।

ञीतः—'ञीत्' धातु से वर्त्तमानार्थ में क्त प्रत्यय होता है।

मतिबुद्धि—इच्छार्थक, ज्ञानार्थक तथा सत्कारार्थक धातुओं से वर्त्तमान काल में क्त प्रत्यय होता है।

तृतीयाध्याय का द्वितीय पाद समाप्त हुआ।

---

(१) क्वचित् सुप्त इति पाठः।

# अथ तृतीयाध्यायस्य तृतीयः पादः ॥

## उणादयो बहुलम् ॥ १ ॥

वर्त्तमान इत्येव, संज्ञायामिति च। उणादयः प्रत्यया वर्त्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति। यतो विहितास्ततोऽन्यत्रापि भवन्ति। केचिदविहिता एव प्रयोगत उन्नीयन्ते। "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" (उ० सू०)—कारुः, वायुः, पायुः, जायुः, मायुः, स्वादुः, साधुः, आशुः।

बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ १ ॥
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ २ ॥
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ ३ ॥

## भूतेऽपि दृश्यन्ते ॥ २ ॥

पूर्वत्र वर्त्तमानाधिकाराद्भूतार्थमिदं वचनम्। भूते काले उणादयः प्रत्यया दृश्यन्ते। वृत्तमिदं वर्त्म। चरितं तदिति चर्म। भसितं तदिति भस्म। दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## भविष्यति गम्यादयः ॥ ३ ॥

भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति। प्रत्ययस्यैव भविष्यत्कालता विधीयते न प्रकृतेः। गमी ग्रामम्। आगामी। प्रस्थायी। प्रतिरोधी। प्रतिबोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। आयायी। भावी। ॐअनद्यतन उपसंख्यानम्ॐ। श्वो गमी ग्रामम् ॥

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

भविष्यतीत्येव। यावत्पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट् प्रत्ययो भवति। यावद्भुङ्क्ते। पुरा भुङ्क्ते। निपातयोरिति किम्? यावद्दास्यति तावद्भोक्ष्यते, करणभूतया पुरा व्रजिष्यति ॥

## विभाषा कदाकर्ह्योः ॥ ५ ॥

कदा, कर्हि इत्येतयोरुपपदयोर्विभाषा भविष्यति काले धातोर्लट् प्रत्ययो भवति।

---

उणादयो—संज्ञाविषय में वर्तमान काल में उणादि प्रत्यय विकल्प से होते हैं।

कृवापा—'कृ', 'वा', 'पा', 'मि', 'स्वदि', 'साधि' तथा 'अशू' धातुओं से उण् प्रत्यय होता है।

भूतेऽपि—भूतकाल में भी उणादि प्रत्यय देखे जाते हैं।

भविष्यति—भविष्यत् काल में गमी आदि शब्द साधु हैं।

अनद्यतने—अनद्यतन भविष्यत् काल में गमी आदि शब्दों की साधुता का प्रतिपादन करना चाहिए।

यावत्—यावत् तथा पुरा इन दोनों में से किसी भी निपात के उपपद होने से धातु से भविष्यत् काल में लट् प्रत्यय होता है।

विभाषा—कदा तथा कर्हि के उपपदत्व में धातु से भविष्यत् काल में विकल्प से लट् प्रत्यय होता है।

कदा भुङ्क्ते । कदा भोच्यते । कदा भोक्ता । कर्हि भुङ्क्ते । कर्हि भोच्यते । कर्हि भोक्ता ॥

## किंवृत्ते लिप्सायाम् ॥ ६ ॥

विभाषेति वर्त्तते । किमो वृत्तं(१) किंवृत्तम् । वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरडतमौ चेति परिसंख्यानं स्मर्यते । किंवृत्त उपपदे लिप्सायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति । लिप्सा लब्धुमिच्छा, प्रार्थनाभिलाषः । कं भवन्तो भोजयन्ति । कं भवन्तो भोजयितारः । लब्धुकामः पृच्छति—कतरो भिक्षां दास्यति, ददाति, दाता वा । कतमो भिक्षां दास्यति, ददाति, दाता वा । लिप्सायामिति किम् ? कः पाटलिपुत्रं गमिष्यति ॥

## लिप्स्यमानसिद्धौ च ॥ ७ ॥

विभाषेत्येव । लिप्स्यमानात्सिद्धिर्लिप्स्यमानसिद्धिः । लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति । अकिंवृत्तार्थोऽयमारम्भः । यो भक्तं ददाति स स्वर्गं गच्छति । यो भक्तं दास्यति स स्वर्गं गमिष्यति । यो भक्तं दाता स स्वर्गं गन्ता । लिप्स्यमानाद् भक्तात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ॥

## लोडर्थलक्षणे च ॥ ८ ॥

लोडर्थः प्रैषादिर्लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः, तत्र वर्त्तमानाद्धातोर्भविष्यति काले विभाषा लट् प्रत्ययो भवति । उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व । उपाध्यायागमनमध्य(२)यनप्रैषस्य लक्षणम् ॥

## लिङ् चोर्ध्वमौहूर्त्तिके ॥ ९ ॥

भविष्यति, विभाषा, लोडर्थलक्षण इति सर्वमनुवर्त्तते । ऊर्ध्वमौहूर्त्तिके भविष्यति काले लोडर्थलक्षणार्थे वर्त्तमानाद्धातोर्विभाषा लिङ् प्रत्ययो भवति, चकाराल्लट् च । ऊर्ध्वं मुहूर्त्ताद्भव ऊर्ध्वमौहूर्त्तिकः । निपातनात् समासः, उत्तरपदवृद्धिश्च(३) । भविष्यतश्चैतद्विशेषणम् । ऊर्ध्वं मुहूर्त्तात्=उपरि मुहूर्तस्य उपाध्यायश्चेदागच्छेत्, उपाध्ययश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व ॥

---

किं वृत्ते—विभक्त्यन्त किम शब्द तथा डतरप्रत्ययान्त एवम् डतमप्रत्ययान्त किम् शब्द के उपपद होने पर धातु से भविष्यत् काल में लट् प्रत्यय होता है विकल्प से लिप्सा के गम्यमान होने पर ।

लिप्स्यमान—लिप्स्यमानप्रयुक्त सिद्धि के गम्यमान होने पर धातु से भविष्यत् काल में विकल्प से लट् प्रत्यय होता है ।

लोडर्थ—प्रैषादि लोडर्थ के लक्षक धातु से भविष्यत् काल में लट् प्रत्यय होता है विकल्प से ।

लिङ्—एक मुहूर्त के बाद के भविष्यत काल में 'होने वाले लोडर्थलक्षक धातु से विकल्प से लिङ् तथा लट् प्रत्यय होते हैं ।

---

(१) किंवृत्तमिति-यत्र किंशब्दोऽवयवत्वेन वर्त्तते तत्सर्वं किंवृत्तम् । अतिप्रसंगवावारणायाह—तदित्यादि । तच्छब्देन किं शब्दो गृह्यते । डतरडतमौ चेति-डतरडतमान्तं किंशब्दरूपमित्यर्थः ।

(२) अध्ययनविषयः प्रैषोऽध्ययनप्रैषः, शाकपार्थिवादित्वान्मध्यमपदलोपः समासः ।

(३) आदिस्वरवृद्धेर्नियमप्राप्तत्वात् उत्तरपदवृद्धिमात्रं निपातनीयम् इत्याशयः । (श्रीना०)

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ १० ॥

भविष्यतीत्येव। क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्ण्वुलौ प्रत्ययौ भवतः। भोक्तुं व्रजति। भोजको व्रजति। भुजिः क्रियार्थो व्रजिरत्रोपपदम्। क्रियायामिति किम्? भिक्षिष्य इत्यस्य जटाः। क्रियार्थायामिति किम्? धावतस्ते पतिष्यति दण्डः। अथ किमर्थं ण्वुल् विधीयते, यावता "ण्वुल्तृचौ" इति सामान्येन विहित एव, सोऽस्मिन्नपि विषये भविष्यति? लृटा क्रियार्थोपपदेन बाध्येत। वासरूपविधिना सोऽपि भविष्यति? एवं तर्ह्येतज्ज्ञाप्यते-क्रियायामुपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। तेन कर्त्ता व्रजति, विक्षिपो व्रजतीत्येवमादि निवर्त्यते॥

## भाववचनाश्च ॥ ११ ॥

भविष्यतीत्येव। "भावे" इति प्रकृत्य ये घञादयो विहितास्ते च भाववचना भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति। किमर्थमिदम्, यावता विहिता एव ते? क्रियार्थोपपदे विहितेनास्मिन्विषये तुमुना बाध्येरन्। वासरूपविधिश्चात्र नास्तीत्युक्तम्। अथ वचनग्रहणं किमर्थम्? वाचका यथा स्युः। कथं च वाचका भवन्ति? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिताः यदि ताभ्यस्तथैव भवन्ति नासाम(१)ञ्जस्येनेति। पाकाय व्रजति। भूतये व्रजति। पुष्टये व्रजति॥

## अण् कर्मणि च ॥ १२ ॥

भविष्यतीत्येव। चकारः सन्नियोगार्थः। धातोरण्प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायाम्। "कर्मण्यण्" इति सामान्येन विहितो वासरूपविधेरभावात् ण्वुला बाधितः पुनरण्विधीयते, सोऽपवादत्वाद् ण्वुलं बाधते, परत्वात् कादीन्। तेनापवादविषयेऽपि भवत्येव—काण्डलावो व्रजति, अश्वदायो व्रजति, गोदायो व्रजति, कम्बलदायो व्रजति॥

## लृट् शेषे च ॥ १३ ॥

भविष्यतीत्येव। शेषः क्रियार्थोपपदादन्यः। शेषे, शुद्धे भविष्यति काले, चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट् प्रत्ययो भवति। करिष्यामीति व्रजति। हरिष्यामीति व्रजति। शेषे खल्वपि-करिष्यति, हरिष्यति॥

## लृटः सद्वा ॥ १४ ॥

लृटः स्थाने सत्संज्ञौ शतृशानचौ वा भवतः। व्यवस्थितविभाषेयम्। तेन यथा लटः शतृशानचौ तथाऽस्यापि भवतः। अप्रथमासमानाधिकरणादिषु नित्यम्, अन्यत्र

---

तुमुन्—क्रियार्था क्रिया के उपपद होने पर धातु से भविष्यत् काल में तुमुन् तथा ण्वुल् प्रत्यय होते हैं।

भाववचनाश्च—भाववाचक प्रत्यय भी क्रियार्था क्रिया के उपपद होने पर धातु से भविष्यत् काल में विहित होते हैं।

अण्—कर्मकारक तथा क्रियार्था क्रिया के भी उपपद होने पर भविष्यत् काल में धातु से अण् प्रत्यय होता है।

लृट् शेषे—क्रियार्था क्रिया के उपपदत्व तथा अनुपपदत्व में भी भविष्यत् काल में धातु से लृट् लकार होता है।

लृटः सद्वा—लृट् के स्थान में सत्संज्ञक शतृ तथा शानच् आदेश विकल्प से होते हैं।

---

(१) असामञ्जस्येन-अनियमेन अन्योन्यविषयावगाहनेनेत्यर्थः।

विकल्पः—करिष्यन्तं देवदत्तं पश्य, करिष्यमाणं देवदत्तं पश्य; हे करिष्यन्, हे करिष्यमाण; ( अर्जयिष्यमाणो वसति )। प्रथमासमानाधिकरणे विकल्पः-करिष्यन् देवदत्तः, करिष्यमाणो देवदत्तः; करिष्यति, करिष्यते ॥

## अनद्यतने लुट् ॥ १५ ॥

भविष्यतीत्येव। भविष्यदनद्यतनेऽर्थे वर्त्तमानाद्धातोर्लुट् प्रत्ययो भवति। लृटोऽपवादः। श्वः कर्ता। श्वो भोक्ता। अनद्यतन इति बहुव्रीहिनिर्देशः। तेन व्यामिश्रे न भवति—अद्य श्वो वा भविष्यतीति। ॐपरिदेवने(१)श्वस्तनी भविष्यदर्थे वक्तव्याॐ। इयं नु कदा गन्ता, यैवं पादौ निदधाति। अयं नु कदाध्येता, य एवमनभियुक्तः ॥

## पदरुजविशस्पृशो घञ् ॥ १६ ॥

भविष्यतीति निवृत्तम्। इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः। पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति। पद्यतेऽसौ पादः। रुजत्यसौ रोगः। विशत्यसौ वेशः। ॐस्पृश उपताप इति वक्तव्यम्ॐ। स्पृशतीति स्पर्श उपतापः। ततोऽन्यत्र पचाद्यच् भवति—स्पर्शो देवदत्तः। स्वरे विशेषः ॥

## सृ स्थिरे ॥ १७ ॥

सर्त्तेर्धातोः स्थिरे कर्त्तरि घञ् प्रत्ययो भवति। स्थिर इति कालान्तरस्थायी पदार्थ उच्यते। स चिरं तिष्ठन् कालान्तर सरतीति धात्वर्थस्य कर्त्ता युज्यते। चन्दनसारः। स्थिर इति किम्? सर्त्ता, सारकः। ॐव्याधिमत्स्यबलेष्विति वक्तव्यम्ॐ। अतीसारो व्याधिः। विसारो मत्स्यः। सारो बलम् ॥

## भावे ॥ १८ ॥

भावे वाच्ये धातोर्घञ् प्रत्ययो भवति। पाकः। त्यागः। रागः। क्रियासामान्यवाची भवतिः, तेनार्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति। धात्वर्थश्च धातुनैवोच्यते। यस्तस्य सिद्धता नाम धर्मस्तत्र घञादयः प्रत्यया विधीयन्ते। पुंल्लिङ्गैकवचनं चात्र न तन्त्रम्, लिङ्गान्तरे वचनान्तरेऽपि चात्र प्रत्यया भवन्त्येव—पक्तिः, पक्वम्, पचनम्, पाकौ, पाका इति ॥

## अकर्तरि च कारके संज्ञायाम् ॥ १९ ॥

कर्तृवर्जिते कारके संज्ञायां विषये धातोर्घञ् भवति। प्रास्यन्ति तं प्रासः। प्रसीव्यन्ति तं प्रसेवः। आहरन्ति तस्माद्रसमित्याहारः। मधुराहारः। तक्षशिलाहारः। अकर्त्तरीति किम्? मिषत्यसो मेषः। संज्ञायामिति किम्? कर्तव्यः कटः। चकारः संज्ञाव्यभिचारार्थः—

---

अनद्यतने—अनद्यतन भविष्यत् काल में धातु से लुट् प्रत्यय होता है।

परिदेवने—परिदेवन अर्थ में ( अद्यनन ) भविष्यत् काल में भी श्वस्तनी अर्थात् लुट् प्रत्यय, का ही विधान समझना चाहिए।

पदरुज—'पद', 'रुज', 'विश' तथा 'स्पृश' धातुओं से घञ् प्रत्यय होता है।

स्पृश—'स्पृश' धातु से उपताप अर्थ में घञ् प्रत्यय का विधान समझना चाहिए।

सृ स्थिरे—'सृ' धातु से स्थिरत्वविशिष्टकर्त्रर्थ में घञ् प्रत्यय होता है।

व्याधि—व्याधि, मत्स्य तता बल अर्थ में भी 'सृ' धातु से घञ् प्रत्यय समझना चाहिए।

भावे—भाव अर्थ में धातु से घञ् प्रत्यय होता है।

अकर्त्तरि—कर्तृभिन्नकारक के वाच्य होने पर धातु से संज्ञाविषय में घञ् प्रत्यय होता है।

---

( १ ) परिदेवनमनुशोचनम्। श्वस्तनीति लुटः पूर्वाचार्यसंज्ञा। अनभियुक्तः=परिचयरहितः।

को भवता दायो दत्तः, को भवता लाभो लब्धः। कारकग्रहणं पर्युदासे न कर्त्तव्यम् ? तक्रियते प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनार्थम् "आदेच उपदेशेऽशिति" इति। इत उत्तरं भावेऽकर्त्तरि च कारके इति च द्वयमनुवर्त्तते ॥

## परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥

परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। एकस्तण्डुलनिचायः(१)। द्वौ शूर्पनिष्पावौ। 'कॄ विक्षेपे'–द्वौ कारौ, त्रयः काराः। सर्वग्रहणमपोऽपि बाधनार्थम्। पुरस्तादपवादन्यायेन ह्यचमेव बाधेत, नापम्। परिमाणाख्यायामिति किम् ? निश्चयः। आख्याग्रहणं रूढिनिरासार्थम्, तेन संख्यापि गृह्यते, न प्रस्थाद्येव। घञनुक्रमणमजपोर्विषये, स्त्रीप्रत्ययास्तु न बाध्यन्ते—एका तिलोच्छित्तिः, द्वे प्रसूती(२)। *दारजारौ कर्त्तरि णिलुक् च*। दारयन्तीति दाराः(३)। जरयन्तीति जाराः ॥

## इङश्च ॥ २१ ॥

इङो धातोर्घञ् प्रत्ययो भवति। अचोऽपवादः। अध्यायः। उपेत्यास्मादधीते उपाध्यायः। *अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्*। उपाध्याया, उपाध्यायी। *शॄ वायुवर्णनिवृतेषु*। शारो वायुः। शारो(४) वर्णः। शारो निवृतम् ॥

गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥

## उपसर्गे रुवः ॥ २२ ॥

उपसर्ग उपपदे रौतेर्धातोर्घञ् प्रत्ययो भवति। अपोऽपवादः। संरावः। उपरावः। उपसर्ग इति किम् ? रवः ॥

---

परिमाणा—परिमाण-संज्ञा के अर्थ में सभी धातुओं से घञ् प्रत्यय होता है।

दारजारौ—कर्त्ता अर्थ में हेतुमण्ण्यन्त 'दॄ' तथा 'जॄष्' धातुओं से घञ् प्रत्यय तथा णिच् के लोप का निपातन समझना चाहिए।

इङश्च—'इङ्' धातु से भी घञ् प्रत्यय होता है।

अपादाने—अपादानार्थ में स्त्रीत्वविवक्षा में 'इङ्' धातु से घञ् प्रत्यय तथा घञन्त से ङीष् का विधान समझना चाहिए।

शॄ—वायु, वर्ण तथा निवृत अर्थों में 'शॄ' धातु से घञ् प्रत्यय अवगन्तव्य है।

उपसर्गे—उपसर्गोपपदक 'रु' धातु से घञ् प्रत्यय होता है।

---

(१) निचीयते राशीक्रियते इति निचायो राशिः, तण्डुलानां निचाय इति षष्ठीसमासः। निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः। शूर्पेण निष्पावः शूर्पनिष्पावः। विक्षिप्तो धान्यादिः कारः। उच्छित्तिः-ऊर्ध्वीकृतो राशिः इति पदमञ्जरी।

(२) द्वे प्रसृती इति क्वचित्।

(३) दारा इत्यस्याग्रे अचि प्राप्ते घञ्। दारा इत्यत्रापि सिद्ध्यति। घञापि घञोऽन्त उदात्त इति स्वरसिद्धिः इति क्वचिदधिकमुपलभ्यते।

(४) चित्रीकरणमत्र धात्वर्थः, चित्रीक्रियतेनेनाश्रय इति चित्रीकरणम्। निव्रियते आव्रियतेऽनेन शरीरमिति निवृतमावरणमुच्यते इति पदमञ्जरी।

## समि युद्रुदुवः ॥ २३ ॥

समि उपपदे यु, द्रु, दु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति । संयावः(१)। संद्रावः । संदावः । समीति किम् ? प्रयवः ॥

## श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥

श्रि, णी, भू इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति । अजपोरपवादः । श्रायः । नायः । भावः । अनुपसर्गे इति किम् ? प्रश्रयः, प्रणयः, प्रभवः । कथं प्रभावो राज्ञः ? प्रकृष्टो भाव इति प्रादिसासो भविष्यति । कथं च नयो राज्ञः ? "कृत्यल्युटो बहुलम्" इत्यज् भविष्यति ॥

## वौ क्षुश्रुवः ॥ २५ ॥

वावुपपदे क्षु, श्रु इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति । अपोऽपवादः । विक्षावः । विश्रावः । वाविति किम् ? क्षवः, श्रवः ॥

## अवोदोर्नियः ॥ २६ ॥

अव, उत् इत्येतयोरुपपदयोर्नयतेर्धातोर्घञ् प्रत्ययो भवति । अवनायः(२) । उन्नायः । कथमुन्नयः पदार्थानाम् ? "कृत्यल्युटो बहुलम्" इत्यज् भविष्यति ॥

## प्रे द्रुस्तुस्रुवः ॥ २७ ॥

प्रशब्द -उपपदे द्रु, स्तु, स्रु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्र इति किम् ? द्रवः, स्तवः, स्रवः ॥

## निरभ्योः पूल्वोः ॥ २८ ॥

पू इति पूङ्पूञोः सामान्येन ग्रहणम् , 'लूञ् छेदने' । यथासंख्यमुपसर्गसंबन्धः । निरभिपूर्वयोः पूल्वोर्धात्वोर्घञ् प्रत्ययो भवति । निष्पावः(३) । अभिलावः । निरभ्योरिति किम् ? पवः, लवः ॥

## उन्न्योर्ग्रः ॥ २९ ॥

'गॄ शब्दे', 'गॄ निगरणे' द्वयोरपि ग्रहणम् । उन्न्योरुपपदयोः गॄ इत्येतस्माद्धातोर्घञ् प्रत्ययो भवति । उद्गारः(४)समुद्रस्य । निगारो देवदत्तस्य । उन्न्योरिति किम् ? गरः ॥

---

समि—समुपपदक 'यु', 'द्रु' तथा 'दु' धातुओं से घञ् प्रत्यय होता है ।

श्रिणी—अनुपसर्गक 'श्रि', 'नी' तथा 'भू' धातुओं से घञ् प्रत्यय होता है ।

वौ क्षुश्रुवः—वि के उपपद होने पर 'क्षु' तथा 'श्रु' धातुओं से घञ् प्रत्यय होता है ।

अवो—अव तथा उत् के उपपद होने पर 'नी' धातु से घञ् प्रत्यय होता है ।

प्रे—प्र शब्द के उपपद होने पर 'द्रु', 'स्तु' तथा 'स्रु' धातुओं से घञ् प्रत्यय होता है ।

निरभ्योः—निपूर्वक 'पूङ्' तथा 'पू' धातुओं से और अभिपूर्वक 'लूञ्' धातु से घञ् प्रत्यय होता है ।

उन्न्योर्ग्रः—उत्पूर्वक तथा निपूर्वक 'गॄ' धातु से घञ् प्रत्यय होता है ।

---

(१) संयावः पिष्टविकारोऽपूपविशेषः, संयूयते मिश्रीक्रियते गुडजीरकादिभिरिति कृत्वा इति पदमञ्जरी ।

(२) अधो नयनमवनायः, ऊर्ध्वनयनमुन्नायः, उन्नयस्तूत्प्रेक्षा इति पदमञ्जरी ।

(३) निष्पावः, कोशीधान्यविशेषः, निष्पूयते शूर्पादिभिरिति कृत्वा इति पदमञ्जरी ।

(४) उद्गारोऽतिप्रवृद्धः शब्दः, निगारो भक्षणम् इति पदमञ्जरी ।

## कॄ धान्ये ॥ ३० ॥

उन्न्योरिति वर्त्तते। कॄ इत्येतस्माद्धातोरुन्न्योरुपपदयोर्घञ् प्रत्ययो भवति धान्यविषयश्चेद्धात्वर्थो भवति। विक्षेपार्थस्य किरतेर्ग्रहणं न हिंसार्थस्य, (१)अनभिधानात्। उत्कारो धान्यस्य। निकारो धान्यस्य। धान्य इति किम्? भैक्ष्योत्करः, पुष्पनिकरः॥

## यज्ञे समि स्तुवः ॥ ३१ ॥

यज्ञविषये प्रयोगे संपूर्वात् स्तौतेर्घञ्प्रत्ययो भवति। संस्तावश्छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्ताव इत्युच्यते। यज्ञ इति किम्? संस्तवश्छात्रयोः॥

## प्रे स्त्रोऽयज्ञे ॥ ३२ ॥

'स्तृञ् आच्छादने', अस्माद्धातोः प्रशब्दे उपपदे घञ् प्रत्ययो भवति, न चेद्यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः(२)। अयज्ञ इति किम्? बर्हिष्प्रस्तरः(३)॥

## प्रथने वावशब्दे ॥ ३३ ॥

'स्तृञ् आच्छादने', अस्माद्धातोर्विशब्द उपपदे घञ् प्रत्ययो भवति प्रथने गम्यमाने, तच्चेत् प्रथनं शब्दविषयं न भवति। प्रथनं विस्तीर्णता। पटस्य विस्तारः(४)। प्रथन इति किम्? तृणविस्तरः। अशब्द इति किम्? विस्तरो वचसाम्॥

## छन्दोनाम्नि च ॥ ३४ ॥

वो स्त्र इति वर्त्तते। विपूर्वात्स्तृणातेश्छन्दोनाम्नि घञ् प्रत्ययो भवति। (५)वृत्तमत्र छन्दो गृह्यते, यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्राह्मणम्, नामग्रहणात्। विष्टारपंक्तिश्छन्दः। विष्टारबृहतीच्छन्दः। विष्टारपंक्तिशब्दोऽत्र छन्दोनाम, न घञन्तं शब्दरूपम्, तत्र त्ववयवत्वेन तद्वर्त्तते। छन्दोनाम्नीत्यधिकरणसप्तम्येषा॥

## उदि ग्रहः ॥ ३५ ॥

उद्युपपदे ग्रहेर्द्धातोर्घञ्प्रत्ययो भवति। अपोऽपवादः। उद्ग्राहः। ॐछन्दसि निपूर्वा-

---

कॄ धान्ये—उत्पूर्वक 'कॄ' धातु से घञ् प्रत्यय होता है यदि धात्वर्थ का सम्बन्ध धान्य से हो।

यज्ञे—यज्ञविषयक प्रयोग में सम्पूर्वक 'स्तु' धातु से घञ् प्रत्यय होता है।

प्रे—यदि यज्ञविषयक प्रयोग न हो तो 'स्तृञ्' धातु से घञ् प्रत्यय होता है।

प्रथने—विपूर्वक 'स्तृञ्' धातु से घञ् प्रत्यय होता है यदि उससे शब्दातिरिक्तविषयक प्रथन (विस्तार) की प्रतीति हो।

छन्दो—निपूर्वक 'स्तृञ्' धातु से घञ् प्रत्यय होता है यदि समुदाय से छन्दोविशेष (=वृत्त) का अभिधान होता हो।

उदि—उत्पूर्वक 'ग्रह' धातु से घञ् प्रत्यय होता है।

छन्दसि—स्रुगात्मक आहुतिप्रदानसाधनीभूत पदार्थविशेष के उन्नमन तथा उसके अवनमन अर्थों में निपूर्वक 'ग्रह' धातु से भी वेद-विषय में घञ् प्रत्यय का विधान अवगन्तव्य है।

---

(१) अनभिधानात् = शब्दशक्तिस्वाभाव्यात्।

(२) मणिप्रस्तार इत्यप्युदाहरणं क्वचित्।

(३) प्रस्तरो मुष्टिविशेषः, बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः।

(४) विस्तारस्तिर्यगायतिः।

(५) अक्षरसंख्यादत्तभरस्वरूपं छन्दो वृत्तम्। तदुक्तम्—'वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्' इति। (श्रीना०)

## ऋतोऽञ् ॥ ४९ ॥

ऋकारान्तात्प्रातिपदिकादञ् प्रत्ययो भवति तस्य धर्म्यमित्येतस्मिन् विषये। ठकोऽपवादः। पोतुर्धर्म्यं पौत्रम्। औद्गात्रम्। ※नराच्चेति वक्तव्यम्※। नरस्य धर्म्या नारी। ※विशसितुरिड्लोपश्च※। विशसितुर्धर्म्यं वैशस्त्रम्। ※विभाजयितुर्णिलोपश्च※। विभाजयितुर्धर्म्यं वैभाजित्रम् ॥

## अवक्रयः ॥ ५० ॥

तस्येत्येव। षष्ठीसमर्थादवक्रय इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अवक्रीणीतेऽनेनेत्यवक्रयः पिण्डक उच्यते। शुल्कशालाया अवक्रयः, शौल्कशालिकः। आकरिकः(१) आपणिकः। गौल्मिकः। नन्ववक्रयोऽपि धर्म्यमेव? नैतदस्ति। लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति ॥

## तदस्य पण्यम् ॥ ५१ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत्तद्भवति। अपूपाः पण्यमस्य आपूपिकः। शाष्कुलिकः। मौदकिकः। पण्यमिति विशेषणं तद्धितवृत्तावन्तर्भूतमतः पण्यशब्दो न प्रयुज्यते ॥

## लवणाट्ठञ् ॥ ५२ ॥

लवणशब्दाट्ठञ् प्रत्ययो भवति तदस्य पण्यमित्येतस्मिन् विषये। ठकोऽपवादः। स्वरे विशेषः। लवणं पण्यमस्य लावणिकः ॥

## किशरादिभ्यः ष्ठन् ॥ ५३ ॥

किशर इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति तदस्य पण्यमित्येतस्मिन् विषये। ठकोऽपवादः। किशरादयो गन्धविशेषवचनाः। किशराः पण्यमस्य किशरिकः, किशरिकी। नरदिकः, नरदिकी। किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुलु। उशीर। हरिद्रा। हरिद्रायणी। किशरादिः ॥

## शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति तदस्य पण्यमित्येतद्विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। शलालुशब्दो गन्धविशेषवचनः। शलालु पण्यमस्य शलालुकः, शलालुकी, शालालुकः, शालालुकी ॥

---

ऋतोऽञ्—षष्ठीसमर्थ ऋकारान्त प्रातिपदिक से धर्म्य अर्थ में अञ् प्रत्यय होता है।

नराच्चेति—नर शब्द से भी अञ् प्रत्यय समझना चाहिए।

विशसितुः—विशसितृ शब्द से अञ् प्रत्यय तथा आगमीभूत इट् का लोप भी समझना चाहिए।

विभाजयितुः—विभाजयितृ शब्द से अञ् प्रत्यय तथा णिलोप भी समझना चाहिए।

अवक्रयः—षष्ठीसमर्थ प्रातिपदिक से अवक्रय अर्थ में ठक् प्रत्यय होता है।

तदस्य—पण्यप्रतिपादक प्रथमासमर्थ शब्द से षष्ठ्यर्थ में ठक् प्रत्यय होता है।

लवणात्—पण्य-स्थानीय लवण शब्द से षष्ठ्यर्थ में ठञ् प्रत्यय होता है।

किशरादिभ्यः—पण्य-स्थानीय किशर आदि शब्दों से षष्ठ्यर्थ में ष्ठन् प्रत्यय होता है।

शलालुनः—पण्य-स्थानीय शलालु शब्द से षष्ठ्यर्थ में विकल्प से ष्ठन् प्रत्यय होता है।

---

(१) आन्तरगारिक इति पाठान्तरम्।

## शिल्पम् ॥ ५५ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति। शिल्पं कौशलम्। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। पाणविकः। वैणिकः। मृदङ्गवादने वर्त्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति। शिल्पं तद्धितवृत्तावन्तर्भवति॥

## मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥

मड्डुकझर्झरशब्दाभ्यामन्यतरस्यामण् प्रत्ययो भवति तदस्य शिल्पमित्येतस्मिन् विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। मड्डुकवादनं शिल्पमस्य माड्डुकः। माड्डुकिकः। झार्झरः। झार्झरिकः॥

## प्रहरणम् ॥ ५७ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति। असिः प्रहरणमस्य आसिकः। प्रासिकः। चाक्रिकः। धानुष्कः॥

## परश्वधाट्ठञ् च ॥ ५८ ॥

परश्वधशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक्। स्वरे विशेषः। परश्वधः प्रहरणमस्य पारश्वधिकः॥

## शक्तियष्ट्योरीकक् ५९ ॥

शक्तियष्टिशब्दाभ्यामीकक् प्रत्ययो भवति तदस्य प्रहरणमित्येतस्मिन् विषये। ठकोऽपवादः। शक्तिः प्रहरणमस्य शाक्तीकः। याष्टीकः॥

## अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥

तदस्येत्येव। तदिति प्रथमासमर्थेभ्योऽस्ति नास्ति दिष्ट इत्येतेभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रमासमर्थं मतिश्चेत्तद्भवति। अस्ति मतिरस्य आस्तिकः। नास्ति मतिरस्य नास्तिकः। दैष्टिकः। न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः। तद्विपरीतो नास्तिकः। प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः। तदेतदभिधानशक्तिस्वभावाल्लभ्यते। अस्तिनास्तिशब्दौ निपातौ, वचनसामर्थ्याद्वा आख्याताद्वाक्याच्च प्रत्ययः॥

## शीलम् ॥ ६१ ॥

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठ क् प्रत्ययो भवति यत्तत्प्रथ

---

शिल्पम्—प्रथमासमर्थ शिल्प-स्थानीय शब्दों से षष्ठ्यर्थ में ठक् प्रत्यय होता है।

मड्डुक—शिल्पस्थानीय पदार्थवाचक मड्डुक तथा झर्झर शब्दों से विकल्प से षष्ठ्यर्थ में अण् प्रत्यय होता है।

प्रहरणम्—प्रहरणस्थानीय पदार्थवाचक प्रथमासमर्थ शब्दों से षष्ठ्यर्थ में ठक् प्रत्यय होता है।

परश्वधात्—प्रहरणस्थानीयपदार्थवाचक परश्वध शब्द से ठञ् तथा ठक् प्रत्यय होते हैं।

शक्ति—प्रहरणस्थानीय पदार्थवाचक शक्ति तथा यष्टि शब्दों से षष्ठ्यर्थ में ईकक् प्रत्यय होता है।

अस्ति—प्रथमासमर्थ मतिप्रतिपादक अस्ति, नास्ति तथा दिष्ट शब्दों से षष्ठ्यर्थ में ठक् प्रत्यय होता है।

शीलम्—स्वभावप्रतिपादक प्रथमासमर्थ शब्दों से षष्ठ्यर्थ में ठक् प्रत्यय होता है।

मासमर्थं शीलं चेत्तद्भवति । शीलं स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः । भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति ॥

## छत्रादिभ्यो णः ॥ ६२ ॥

छत्र इत्येवमादिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति तदस्य शीलमित्येतस्मिन् विषये । ठकोऽपवादः । छत्रं शीलमस्य छात्रः । छादनादावरणाच्छत्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तश्छत्रशीलः शिष्यश्छात्रः । स्थाशब्दोऽत्र पठ्यते, स उपसर्गपूर्वोऽत्र गृह्यते—आस्था, संस्था, अवस्थेति । छत्र । बुभुक्षा । शिक्षा । पुरोह । स्था । चुरा । उपस्थान । ऋषि । कर्मन् । विश्वधा । तपस् । सत्य । अनृत । शिबिका । छत्रादिः ॥

## कर्माध्ययने वृत्तम् ॥ ६३ ॥

तदस्येत्येव । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं कर्म चेत्तद्वृत्तमध्ययनविषयं भवति । एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः । द्वैयन्यिकः । त्रैयन्यिकः । एकमन्यदिति विगृह्य "तद्धितार्थ" इति समासः । ततश्च ठक् प्रत्ययः । अध्ययने कर्म वृत्तमित्येतत्सर्वं तद्धितवृत्तावन्तर्भवति । यस्याध्ययने नियुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति । एवं द्वैयन्यिकः, त्रैयन्यिक इति ॥

## बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥

बह्वच् पूर्वपदं यस्य तस्माद् बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति तदस्य कर्माध्ययने वृत्तमित्येतस्मिन्नर्थे । ठकोऽपवादः । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । चतुर्दशान्यिक इति । चतुर्दशापपाठा अस्य जाता इत्यर्थः । उदात्ते कर्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ॥

## हितं भक्षाः ॥ ६५ ॥

तदस्येत्येव । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षाः । ननु च हितयोगे चतुर्थ्या भवितव्यम् , तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति । अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥

## तदस्मै दीयते नियुक्तम् ॥ ६६ ॥

तदिति प्रथमासमर्थाद् अस्मा इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं तच्चेद्दीयते नियुक्तम् । नियोगेनाव्यभिचारेण दीयत इत्यर्थः । अव्यभिचारो नियोगः ।

---

छत्रादिभ्यः- शीलप्रतिपादक छत्र आदि शब्दों से षष्ठ्यर्थ में ण प्रत्यय होता है ।

कर्माध्ययने—प्रथमासमर्थ शब्दों से 'अस्य अध्ययने कर्म वृत्तम्' ( अध्ययन के विषय में इसका कार्य सम्पन्न हुआ ) अर्थ में ठक् प्रत्यय होता है ।

बह्वच्—अनेकाच्-पूर्वपदक प्रथमासमर्थ प्रातिपदिक से 'अस्य अध्ययने कर्म वृत्तम्' अर्थ में ठच् प्रत्यय होता है ।

हितम्—हितभक्षणीयपदार्थप्रतिपादक प्रथमासमर्थ शब्दों से षष्ठ्यर्थ में ठक् प्रत्यय होता है ।

तदस्मै—नियतदीयमानपदार्थप्रतिपादक शब्दों से चतुर्थ्यर्थ में ठक् प्रत्यय होता है ।

अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः। आपूपिकः। शाष्कुलिकः। केचित्तु नियुक्तं नित्यमाहुः। अपूपा नित्यमस्मै दीयन्ते आपूपिकः॥

## श्राणामांसौदनाट्टिठन् ॥ ६७ ॥

श्राणामांसौदनशब्दाभ्यां टिठन् प्रत्ययो भवति तदस्मै दीयते नियुक्तमित्येतस्मिन्नर्थे। ठकोऽपवादः। इकार उच्चारणार्थः। टकारो ङीबर्थः। श्राणा नियुक्तमस्मै दीयते श्राणिकः, श्राणिकी। मांसौदनिकः, मांसौदनिकी। ननु च ठञेव कस्मान्नोच्यते, नह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः—ओदनिकः, ओदनिकी॥

## भक्तादणन्यतरस्याम् ॥ ६८ ॥

भक्तशब्दादण् प्रत्ययो भवत्यन्यतरस्यां तदस्मै दीयते नियुक्तमित्येतस्मिन् विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। भक्तमस्मै दीयते नियुक्तं भाक्तः, भाक्तिकः॥

## तत्र नियुक्तः ॥ ६९ ॥

तत्रेति सप्तमीसमर्थान्नियुक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। नियुक्तोऽधिकृतो व्यापारित इत्यर्थः। शुल्कशालायां नियुक्तः शौल्कशालिकः। आथरिकः(१)। आपणिकः। गौल्मिकः। दौवारिकः॥

## अगारान्ताट्ठन् ॥ ७० ॥

अगारशब्दान्तात्प्रातिपदिकाट्ठन् प्रत्ययो भवति तत्र नियुक्त इत्येतस्मिन् विषये। ठकोऽपवादः। देवागारे नियुक्तो देवागारिकः। कोष्ठागारिकः। भाण्डागारिकः॥

## अध्यायिन्यदेशकालात् ॥ ७१ ॥

तत्रेत्येव। सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकादकालवाचिनश्चाध्यायिन्यभिधेये ठक् प्रत्ययो भवति। अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम्। श्मशानेऽधीते श्माशानिकः। चातुष्पथिकः। अकालात्—चतुर्दश्यामधीते चातुर्दशिकः, आमावास्यिकः। अदेशकालादिति किम् ? स्रुघ्नेऽधीते, पूर्वाह्णेऽधीते॥

## कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥

तत्रेत्येव। कठिनशब्दान्तात्सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति व्यवहरतीत्येतस्मिन्नर्थे। व्यवहारः क्रियातत्त्वम्; यथा लौकिकव्यवहार इति।

---

श्राणा—नियतदीयमानपदार्थप्रतिपादक श्राणा तथा मांसौदन शब्दों से चतुर्थ्यर्थ में टिठन् प्रत्यय होता है।

भक्ताद्—नियतदीयमानार्थक भक्त शब्द से चतुर्थ्यर्थ में विकल्प से अण् प्रत्यय होता है।

तत्र—सप्तमीसमर्थ शब्दों से नियुक्त अर्थ में ठक् प्रत्यय होता है।

अगारान्ताद्—सप्तमीसमर्थ अगारशब्दान्त प्रातिपदिक से नियुक्त अर्थ में ठन् प्रत्यय होता है।

अध्यायिनि—अध्ययनप्रतिषिद्ध सप्तमीसमर्थ देश तथा काल के अभिधायक शब्दों से अध्यायी (पढ़नेवाला) के अभिधेय होने पर ठक् प्रत्यय होता है।

कठिनान्त—सप्तमीसमर्थ कठिनशब्दान्त, प्रस्तार तथा संस्थान शब्दों से 'व्यवहरति' (व्यवहार करता है) अर्थ में ठक् प्रत्यय होता है।

---

(१) आन्तरिक इति पाठान्तरम्।

वंशकठिने व्यवहरति वांशकठिनिकः। वाध्रकठिनिकः। प्रास्तारिकः। सांस्थानिकः॥

## निकटे वसति ॥ ७३ ॥

निकटशब्दात्सप्तमीसमर्थाद्वसतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। यस्य शास्त्रतो निकटवासस्तत्रायं विधिः। आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यमिति शास्त्रम्। निकटे वसति नैकटिको भिक्षुः॥

## आवसथात् ष्ठल् ॥ ७४ ॥

तत्रेत्येव। आवसथशब्दात्सप्तमीसमर्थाद् वसतीत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति। लकारः स्वरार्थः। षकारो ङीषर्थः। आवसथे वसति आवसथिकः, आवसथिकी। ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो विधीयते॥

## प्राग्घिताद्यत् ॥ ७५ ॥

"तस्मै हितम्" इति वक्ष्यति। प्रागेतस्माद्धितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति-"तद्वहति रथयुगप्रासङ्गम्"—रथ्यः, युग्यः, प्रासङ्ग्यः॥

## तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥

तदिति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यो वहतीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः। "रथसीताहलेभ्यो यद्विधौ" इति तदन्तविध्युपसंख्यानात् परमरथ्य इत्यपि भवति॥

## धुरो यड्ढकौ ॥ ७७ ॥

तद्वहतीत्येव। धुर् इत्येतस्माद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे यत् ढक् इत्येतौ प्रत्ययौ भवतः। धुरं वहति धुर्यः, धौरेयः॥

## खः सर्वधुरात् ॥ ७८ ॥

तद्वहतीत्येव। सर्वधुराशब्दाद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे खः प्रत्ययो भवति। सर्वधुरां वहति सर्वधुरीणः। स्त्रीलिङ्गे न्याय्ये सर्वधुरादिति प्रातिपदिकमात्रापेक्षो निर्देशः। ख इति योगविभागः कर्त्तव्य इष्टसंग्रहार्थः-उत्तरधुरीणः, दक्षिणधुरीणः॥

## एकधुराल्लुक् च ॥ ७९ ॥

तद्वहतीत्येव। एकधुराशब्दाद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे खः प्रत्ययो भवति, तस्य च लुग्भवति। वचनसामर्थ्यात्पक्षे लुग्विधीयते। एकधुरां वहति एकधुरीणः, एकधुरः॥

---

निकटे—सप्तमीसमर्थ निकट शब्द से 'वसति' (निवास करता है) अर्थ में ठक् प्रत्यय होता है।

आवसथात्—सप्तमीसमर्थ आवसथ शब्द से 'वसति' अर्थ में ष्ठल् प्रत्यय होता है।

प्राग्—'हितम्' इस अर्थ के निर्देश से पूर्व यत् प्रत्यय का अधिकार है।

तद्वहति—द्वितीयासमर्थ रथ, युग तथा प्रासङ्ग शब्दों से 'वहति' (वहन करता है) अर्थ में यत् प्रत्यय होता है।

धुरो—द्वितीयासमर्थ धुर् शब्द से 'वहति' अर्थ में यत् तथा ढक् प्रत्यय होते हैं।

खः—द्वितीयासमर्थ सर्वधुरा शब्द से 'वहति' अर्थ में ख प्रत्यय होता है।

एक—द्वितीयासमर्थ एकधुरा शब्द से 'वहति' अर्थ में ख प्रत्यय भी होता है और उसका लुक् भी हो जाता है।

## शकटादण् ॥ ८० ॥

तद्वहतीत्येव। शकटशब्दाद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति। शकटं वहति शाकटो गौः ॥

## हलसीराट्ठक् ॥ ८१ ॥

तद्वहतीत्येव। हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां वहतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः ॥

## संज्ञायां जन्याः ॥ ८२ ॥

तद्वहतीत्येव। जनीशब्दाद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति समुदायेन चेत्संज्ञा गम्यते। जनीं वहति जन्या = जामातुर्वयस्या। सा हि विवाहादिषु(१) जामातृसमीपं प्रापयति। जनी वधूरुच्यते ॥

## विध्यत्यधनुषा ॥ ८३ ॥

तदिति द्वितीयासमर्थाद् विद्ध्यतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति न चेद्धनुष्करणं भवति। पादौ विद्ध्यन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः। अधनुषेति किम्? पादौ विद्ध्यति धनुषा। नन्वसमर्थत्वादनभिधानाच्च प्रत्ययो न भवति, नहि धनुषा पद्य इत्युक्ते विवक्षितोऽर्थः प्रतीयते? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते– यस्यां धनुष्करणं न संभाव्यते इति। तेनेह न भवति–चौरं विध्यति, शत्रुं विध्यति देवदत्त इति ॥

## धनगणं लब्धा ॥ ८४ ॥

तदित्येव। धनगणशब्दाभ्यां द्वितीयासमर्थाभ्यां लब्धेत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। धन्यः। गण्यः। लब्धेति तृन्नन्तम्, तेन द्वितीया समर्था विभक्तिर्युज्यते ॥

## अन्नाण्णः ॥ ८५ ॥

अन्नशब्दात्तदिति द्वितीयासमर्थाल्लब्धेत्येतस्मिन्नर्थे णः प्रत्ययो भवति। अन्नं लब्धा आन्नः ॥

## वशं गतः ॥ ८६ ॥

वशशब्दात्तदिति द्वितीयासमर्थाद् गत इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। वशं गतः वश्यः। कामप्राप्तो विधेय इत्यर्थः ॥

---

**शकटादण्**—द्वितीयासमर्थ शकट शब्द से 'वहति' अर्थ में अण् प्रत्यय होता है।

**हल**—द्वितीयासमर्थ हल तथा सीर शब्दों से 'वहति' अर्थ ठक् प्रत्यय होता है।

**संज्ञायाम्**—द्वितीयासमर्थ जनी शब्द से 'वहति' अर्थ में यत् प्रत्यय होता है यदि समुदाय से संज्ञा की प्रतीति हो।

**विध्यति**—द्वितीयासमर्थ शब्द से 'विद्ध्यति' ( वेधन करता है ) अर्थ में यत् प्रत्यय होता है यदि धनुष् वेधन का करण न हो।

**धनगणम्**—द्वितीयासमर्थ धन तथा गण शब्दों से लाभकर्त्ता अर्थ में यत् प्रत्यय होता है।

**अन्नाण्णः**—द्वितीयासमर्थ अन्न शब्द से लाभकर्त्ता अर्थ में ण प्रत्यय होता है।

**वशम्**—द्वितीयासमर्थ वश शब्द से गत ( प्राप्त ) अर्थ में यत् प्रत्यय होता है।

---

( १ ) विहारादिष्विति पाठान्तरम्।

## पदमस्मिन् दृश्यम् ॥ ८७ ॥

निर्देशादेव प्रथमा समर्थविभक्तिः। पदशब्दात्प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्प्रत्ययो भवति। पदं दृश्यमस्मिन् पद्यः कर्दमः। पद्याः पांसवः। शक्यार्थे कृत्यः। शक्यते यस्मिन् पदं द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः। कर्दमस्यावस्थोच्यते-नातिद्रवो नातिशुष्क इति॥

## मूलमस्यावर्हि ॥ ८८ ॥

मूलशब्दात्प्रथमासमर्थादावर्हीत्येवं(१)गुणकादस्येति षष्ठ्यर्थे यत्प्रत्ययो भवति। मूलमेषामावर्हि मूल्या माषाः। मूल्या मुद्गाः। 'बृह उद्यमे', येषां मूलमाबृह्यते उत्पाट्यते ते मूल्याः=सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्ते इत्यर्थः॥

## संज्ञायां धेनुष्या ॥ ८९ ॥

धेनुष्येति निपात्यते संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्। धेनोः षुगागमो यश्च प्रत्ययः। अन्तोदात्तोऽपि ह्ययमिष्यते। या धेनुरुत्तमर्णाय ऋणप्रदानाद्दोहनार्थं दीयते सा धेनुष्या। पीतदुग्धेति यस्याः प्रसिद्धिः। धेनुष्यां भवते ददामि॥

## गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥

निर्देशादेव तृतीया समर्थविभक्तिः। गृहपतिशब्दात्तृतीयासमर्थात्संयुक्त इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति। गृहपतिना संयुक्तः गार्हपत्योऽग्निः। अन्यस्यापि गृहपतिना संयोगोऽस्ति, तत्र संज्ञाऽधिकारादनिष्टप्रसङ्गनिवृत्तिः॥

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्य-वध्यानाम्यसमसमितसम्मितेषु ॥ ९१ ॥

नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासंख्यं यत् प्रत्ययो भवति। प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते। नावा तार्यं नाव्यमुदकम्। नाव्या नदी। शक्यार्थे कृत्यः। वयसा तुल्यो वयस्यः सखा। संज्ञाधिकारोऽभिधेयनियमार्थः। तेन वयसा तुल्ये शत्रौ न भवति। धर्मेण प्राप्यं धर्म्यम्। ननु च 'धर्मादनपेते' इति वक्ष्यमाणेनैव सिद्धम्? नैतदस्ति। धर्मं यदनुवर्त्तते तद्धर्मादनपेतमित्युच्यते। फलं तु धर्मादपैत्येव, कार्यविरोधित्वाद्धर्मस्य। विषेण वध्यो विष्यः। विषेण वधमर्हतीत्यर्थः। मूलेनानाम्यं मूल्यम्। आनाम्यमभिभवनीयम्। पटादीनामुत्पत्तिकारणं मूलं तेन तदभिभूयते शेषीक्रियते। मूल्यं हि सगुणं मूलं करोति। "पोरदुपधात्" इति यति प्राप्ते आनाम्यमिति निपातनात् ण्यत्। मूलेन समो मूल्यः पटः। उपादानेन समानफल इत्यर्थः। सीतया समितं सीत्यं क्षेत्रम्। समितं संगतमित्यर्थः। "रथसीताहलेभ्यो यद्विधौ" इति तदन्त-

---

पदमस्मिन्—दृश्यार्थोपाधिक प्रथमासमर्थ पद शब्द से सप्तम्यर्थ में यत् प्रत्यय होता है।

मूलम्—'आवर्हि' है उपाधि जिसकी ऐसे मूल के वाचक शब्द (उत्पाटनयोग्य मूलवाचक शब्द) से षष्ठ्यर्थ में यत् प्रत्यय होता है।

संज्ञायाम्—संज्ञाविषय में 'धेनुष्या' यह निपातन है।

गृहपतिना—तृतीयासमर्थ गृहपति शब्द से संयुक्त अर्थ में ञ्य प्रत्यय होता है।

नौवयो—तृतीयासमर्थ नौ आदि आठ शब्दों से क्रमशः तार्य आदि आठ अर्थों में यत् प्रत्यय होता है।

---

(१) इत्येवमुपाधिकादिति पाठान्तरम्।

विधिरपीष्यते—परमसीत्यम्, उत्तमसीत्यम्, द्विसीत्यम्, त्रिसीत्यम्। तुलया संमितं तुल्यम्। संमितं समानं सदृशमित्यर्थः। यथा तुला परिच्छिनत्ति परमेवं तदपीति ॥

## धर्मपथ्यर्थन्यायादनपेते ॥ ९२ ॥

निर्देशादेव पञ्चमी समर्थविभक्तिः। धर्मादिभ्यः पञ्चमीसमर्थेभ्योऽनपेत इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। धर्मादनपेतं धर्म्यम्। पथ्यम्। न्याय्यम्। संज्ञाधिकारादभिधेयनियमः ॥

## छन्दसो निर्मिते ॥ ९३ ॥

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः। छन्दःशब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। निर्मित उत्पादितः। छन्दसा निर्मितश्छन्दस्यः। छन्दसा कृत इत्यर्थः। इच्छापर्यायश्छन्दः शब्द इह गृह्यते ॥

## उरसोऽण् च ॥ ९४ ॥

उरःशब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकाराद्यच्च। उरसा निर्मित औरसः पुत्रः, उरस्यः पुत्रः। संज्ञाधिकारादभिधेयनियमः ॥

## हृदयस्य प्रियः ॥ ९५ ॥

निर्देशादेव समर्थविभक्तिः। हृदयशब्दात् षष्ठीसमर्थात् प्रिय इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। हृदयस्य प्रियो हृद्यो देशः। हृद्यं वनम्। संज्ञाधिकारादभिधेयनियमः। इह न भवति—हृदयस्य प्रियः पुत्र इति ॥

## बन्धने चर्षौ ॥ ९६ ॥

हृदयस्येत्येव। बन्धन इति प्रत्ययार्थः, तद्विशेषणमृषिग्रहणम्, बद्ध्यते येन तद् बन्धनम्। हृदयशब्दात् षष्ठीसमर्थाद् बन्धने ऋषावभिधेये यत् प्रत्ययो भवति। ऋषिर्वेदो गृह्यते। हृदयस्य बन्धनमृषिः हृद्यः। परहृदयं येन बद्ध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्य इत्युच्यते ॥

## मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥

मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति। प्रत्ययार्थसामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः। मतं ज्ञानम्, तस्य करणं मत्यम्, भावः साधनं वा। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः, द्विहल्यः, त्रिहल्यः। कर्षणं कर्षः, भावः साधनं वा ॥

## तत्र साधुः ॥ ९८ ॥

तत्रेति सप्तमीसमर्थात् साधुरित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। सामसु साधुः

---

धर्म—पञ्चमीसमर्थ धर्म, पथिन्, अर्थ तथा न्याय शब्दों से अनपेत अर्थ में यत् प्रत्यय होता है।

छन्दसो—तृतीयासमर्थ छन्दस् शब्द से निर्मित अर्थ में यत् प्रत्यय होता है।

उरसोऽण्—तृतीयासमर्थ उरस् शब्द से निर्मित अर्थ में अण् तथा यत् प्रत्यय होते हैं।

हृदयस्य—षष्ठीसमर्थ हृदय शब्द से प्रिय अर्थ में यत् प्रत्यय होता है।

बन्धने—षष्ठीसमर्थ हृदय शब्द से वशीकारक वेद अर्थ में यत् प्रत्यय होता है।

मतजन—षष्ठीसमर्थ मत, जन तथा हल शब्दों से क्रमशः करण, जल्प तथा कर्ष (जोतना) अर्थों में यत् प्रत्यय होता है।

तत्र—सप्तमीसमर्थ शब्दों से साधु अर्थ में यत् प्रत्यय होता है।

सामन्यः। वेमन्यः। कर्मण्यः। शरण्यः। साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः। तत्र हि परत्वात् "तस्मै हितम्" इत्यनेन विधिना भवितव्यम् ॥

## प्रतिजनादिभ्यः खञ् ॥ ९९ ॥

प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति तत्र साधुरित्यर्थे । यतोऽपवादः। प्रतिजने साधुः प्रातिजनीनः। जने जने साधुरित्यर्थः। ऐदंयुगीनः। सांयुगीनः। प्रतिजन। इदंयुग। संयुग। समयुग। परयुग । परकुल । परस्यकुल । अमुष्यकुल । सर्वजन। विश्वजन। पञ्चजन। महाजन। प्रतिजनादिः। यत्र हितार्थ एव साध्वर्थस्तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते ॥

## भक्ताण्णः ॥ १०० ॥

भक्तशब्दात् णः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । भक्ते साधुः भाक्तः शालिः, भाक्तास्तण्डुलाः ॥

## परिषदो ण्यः ॥ १०१ ॥

परिषच्छब्दात् ण्यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः। परिषदि साधुः पारिषद्यः। णप्रत्ययोऽप्यत्रेष्यते । तदर्थं योगविभागः क्रियते-'परिषदः' परिषदो णो भवति। परिषदि साधुः पारिषदः। ततो 'ण्यः' परिषद इत्येव ॥

## कथादिभ्यष्ठक् ॥ १०२ ॥

कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। कथायां साधुः काथिकः। वैकथिकः। विकथा। वितण्डा। कुष्टचित्। जनवाद । जनेवाद। वृत्ति। सद्गृह। गुण। आयुर्वेद। कथादिः ॥

## गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः। गुडे साधुः गौडिक इक्षुः। कौल्माषिको मुद्गः। साक्तुको यवः। गुड। कुल्माष। सक्तु। अपूप। मांसौदन। इक्षु। वेणु। संग्राम। संघात। प्रवास। निवास। उपवास। गुडादिः ॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। पथि साधु पाथेयम्। आतिथेयम्। वासतेयम्। स्वापतेयम् ॥

## सभाया यः ॥ १०५ ॥

सभाशब्दाद्यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये। यतोऽपवादः। स्वरे विशेषः। सभायां साधुः सभ्यः ॥

---

प्रतिजनादिभ्यः—सप्तमीसमर्थ प्रतिजन आदि शब्दों से साधु अर्थ में खञ् प्रत्यय होता है।

भक्ताण्णः—सप्तमीसमर्थ भक्त शब्द से साधु अर्थ में ण प्रत्यय होता है।

परिषदो—सप्तमीसमर्थ परिषत् शब्द से साधु अर्थ में ण्य प्रत्यय होता है।

कथादिभ्यः—सप्तमीसमर्थ कथा आदि शब्दों से साधु अर्थ में ठक् प्रत्यय होता है।

गुडादिभ्यः—सप्तमीसमर्थ गुड़ आदि शब्दों से साधु अर्थ में ठञ् प्रत्यय होता है।

पथ्यतिथि—सप्तमीसमर्थ पथिन्, अतिथि, वसति तथा स्वपति शब्दों से साधु अर्थ में ढञ् प्रत्यय होता है।

सभायाः—सप्तमीसमर्थ सभा शब्द से साधु अर्थ में य प्रत्यय होता है।

## ढश्छन्दसि ॥ १०६ ॥

सभाशब्दाड्ढः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये छन्दसि । यस्यापवादः । 'सभेयोऽस्य युवा यजमानस्य वीरो जायताम्' ॥

## समानतीर्थे वासी ॥ १०७ ॥

साधुरिति निवृत्तम् । वासीति प्रत्ययार्थः । समानतीर्थशब्दात्तत्रेति सप्तमीसमर्थाद् वासीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । समाने तीर्थे वासीति सतीर्थ्यः । समानोपाध्याय(१) इत्यर्थः ॥

## समानोदरे शयित ओ चोदात्तः ॥ १०८ ॥

समानोदरशब्दात्सप्तमीसमर्थाच्छयित इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ओकारश्चोदात्तः । शयितः स्थित इत्यर्थः । समानोदरे शयितः समानोदर्यो भ्राता ॥

## सोदराद् यः ॥ १०९ ॥

सोदरशब्दात् सप्तमीसमर्थात् शयित इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । "विभाषोदरे" इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः । समानोदरे शयितः सोदर्यो भ्राता । "ओ चोदात्तः" इति नानुवर्त्तते । यकारे स्वरः ॥

## भवे छन्दसि ॥ ११० ॥

तत्रेत्येव । सप्तमीसमर्थाद्भव इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति । अणादीनां घादीनां चापवादः । सति दर्शने तेऽपि भवन्ति, सर्वविधीनां छन्दसि व्यभिचारात् । मेध्याय च विद्युत्याय च नमः । आपादपरिसमाप्तेश्छन्दोऽधिकारो भवाधिकारश्च, "समुद्राभ्राद् घः" इति यावत् ॥

## पाथोनदीभ्यां ड्यण् ॥ १११ ॥

पाथःशब्दान्नदीशब्दाच्च ड्यण् प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे । यतोऽपवादः । पाथसि भवः पाथ्यो वृषा । नाद्या गिरो मे प्रयच्छति । पाथोऽन्तरिक्षम् ॥

## वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥

वेशन्तशब्दाद्धिमवच्छब्दाच्चाण् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । यतोऽपवादः । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ॥

## स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥

स्रोतःशब्दाद्विभाषा ड्यत् ड्य इत्येतौ प्रत्ययौ भवतस्तत्र भव इत्येतस्मिन् विषये ।

---

ढश्छन्दसि—सप्तमीसमर्थ सभा शब्द से वेद में साधु अर्थ में ढ प्रत्यय होता है ।

समान—सप्तमीसमर्थ समानतीर्थ शब्द से वासी अर्थ में यत् प्रत्यय होता है ।

समानोदरे—सप्तमीसमर्थ समानोदर शब्द से शयित अर्थ में यत् प्रत्यय तथा प्रकृतिगत ओकार उदात्त हो जाता है ।

सोदराद् यः—सप्तमीसमर्थ सोदर शब्द से शयित अर्थ में य प्रत्यय होता है ।

भवे—सप्तमीसमर्थ शब्दों से भवार्थ में भी य प्रत्यय होता है ।

पाथो—सप्तमीसमर्थ पाथस् शब्द तथा नदी शब्दों से भव अर्थ में ड्यण् प्रत्यय होता है ।

वेशन्त—सप्तमीसमर्थ वेशन्त तथा हिमवत् शब्दों से भव अर्थ में अण् प्रत्यय होता है ।

स्रोतसो—सप्तमीसमर्थ श्रोतस् शब्द से भव अर्थ में विकल्प से ड्यत् तथा ड्य प्रत्यय होते हैं ।

---

(१) तीर्थशब्देनेह गुरुरुच्यते । सामानस्य सभावस्तीर्थे य इत्यधिकं पुस्तकान्तरे ।

यतोऽपवादः। पक्षे सोऽपि भवति। स्रोतसि भवः स्रोत्यः, स्रोतस्यः। ड्यड्ड्ययोः स्वरे विशेषः॥

## सगर्भसयूथसनुताद् यन् ॥ ११४ ॥

सगर्भसयूथसनुतशब्देभ्यो यन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। स्वरे विशेषः। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। सर्वत्र "समानस्य छन्दसि" इति सभावः॥

## तुग्राद् घन् ॥ ११५ ॥

तुग्रशब्दाद् घन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। यतोऽपवादः। त्वमग्ने वृषभस्तुग्रियाणाम्। अब्काकाशयज्ञवरिष्ठेषु तुग्रशब्दः॥

## अग्राद् यत् ॥ ११६ ॥

अग्रशब्दाद्यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अग्रे भवमग्र्यम्। किमर्थमिदं यावता सामान्येन यद्विहित एव? "घच्छौ च" इति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुनर्विधीयते॥

## घच्छौ च ॥ ११७ ॥

अग्रशब्दाद्यत् घच्छौ च प्रत्ययौ भवन्ति तत्र भव इत्येतस्मिन् विषये। अग्र्यम्। अग्रियम्। अग्रीयम्। चकारः "तुग्राद्घन्" इत्यस्यानुकर्षणार्थः। अग्रियम्। स्वरे विशेषः॥

## समुद्राभ्राद् घः ॥ ११८ ॥

समुद्रशब्दादभ्रशब्दाच्च घः प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे। यतोऽपवादः। समुद्रियाणां नदीनाम्। अभ्रियस्येव घोषः। अभ्रशब्दस्यापूर्वनिपातः, तस्य लक्षणस्य(१) व्यभिचारित्वात्॥

## बर्हिषि दत्तम् ॥ ११९ ॥

भव इति निवृत्तम्। बर्हिःशब्दात् सप्तमीसमर्थाद्दत्तमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। बर्हिष्येषु निधिषु प्रियेषु॥

## दूतस्य भागकर्मणी ॥ १२० ॥

निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत् प्रत्ययो भवति। भागोंऽशः। कर्म क्रिया। यत्ते अग्ने दूत्यम्। दूतभागः, दूतकर्म वा॥

---

सगर्भ—सप्तमीसमर्थ सगर्भ, सयूथ तथा सनुत शब्दों से भव अर्थ में यन् प्रत्यय होता है।
तुग्राद्—सप्तमीसमर्थ तुग्र शब्द से भव अर्थ में घन् प्रत्यय होता है।
अग्राद्—सप्तमीसमर्थ अग्र शब्द से भव अर्थ में यत् प्रत्यय होता है।
घच्छौ—सप्तमीसमर्थ अग्र शब्द से भव अर्थ में घ तथा छ प्रत्यय भी होते हैं।
समुद्राभ्राद्—सप्तमीसमर्थ समुद्र तथा अभ्र शब्दों से भव अर्थ में घ प्रत्यय होता है।
बर्हिषि—सप्तमीसमर्थ बर्हिस् शब्द से दत्त अर्थ में यत् प्रत्यय होता है।
दूतस्य—षष्ठीसमर्थ दूत शब्द से भाग तथा कर्म (क्रिया) अर्थों में यत् प्रत्यय होता है।

---

(१) पूर्वनिपातविधायकस्य अल्पाच्तरम्, अजाद्यदन्तम् इत्यादेः, व्यभिचारात्=अनित्यत्वात् इत्यर्थः। (श्रीना०)

## रक्षोयातूनां हननी ॥ १२१ ॥

निर्देशादेव समर्थविभक्तिः । रक्षःशब्दाद्यातुशब्दाच्च षष्ठीसमर्थाद्धननीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हन्यतेऽनयेति हननी । यातं अग्ने रक्षस्या तनूः । रक्षसां हननी । यातव्या यातूनां हननी । बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम् । बहूनां रक्षसां हननेन तनूः स्तूयते ॥

## रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति । प्रशंसनं प्रशस्यम् । भावे क्यप् प्रत्ययः । यद्वो रेवति रेवत्यम् । यद्वो जगति जगत्यम् । यद्वो हविष्या हविष्यम् । हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम् । यस्येति लोपे कृते "हलो यमां यमि"इति लोपः ॥

## असुरस्य स्वम् ॥ १२३ ॥

असुरशब्दात् षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । अणोऽपवादः । असुर्यं वा एतत्पात्रं यच्चक्रकृतं कुलालकृतम् ।

## मायायामण् ॥ १२४ ॥

असुरशब्दात् षष्ठीसमर्थान्मायायां स्वविशेषेऽण् प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । आसुरी माया स्वधया कृतासि ॥

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥

तद्वानिति निर्देशादेव समर्थविभक्तिः । मतुबन्तात्प्रातिदिकात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । लुक् च मतोरिति प्रकृतिनिर्ह्रासः । इतिकरणस्ततश्चेद्विवक्षा । तद्वानित्यवयवेन समुदायो व्यपदिश्यते । वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् । उपधीयते येन स उपधानः । चयनवचन इत्यर्थः । वर्चस्वानुपधानोमन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते वर्चस्या उपदधाति । तेजस्या उपदधाति । पयस्याः । रेतस्याः । तद्वानिति किम् । मन्त्रसमुदायादेव मा भूत् । उपधान इति किम् ? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र मा भूत् । मन्त्र इति किम् ? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत् । इष्टकास्विति किम् ? वर्चस्वानुपधानो मन्त्र एषां कपालानामित्यत्र मा भूत् । इतिकरणो नियमार्थः—अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण ॥

## अश्विमानण् ॥ १२६ ॥

अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान् । अश्विमच्छब्दादण्प्रत्ययो भवति । पूर्वस्य

---

रक्षो—षष्ठीसमर्थ रक्षस् तथा यातु शब्दों से स्त्रीत्वविशिष्ट हननकरण अर्थ में यत् प्रत्यय होता है ।

रेवती—षष्ठीसमर्थ रेवती, जगती तथा हविष्या शब्दों से प्रशस्य अर्थ में यत् प्रत्यय होता है ।

असुरस्य—षष्ठीसमर्थ असुर शब्द से स्व ( आत्मीय ) अर्थ में यत् प्रत्यय होता है ।

माया—षष्ठीसमर्थ असुर शब्द से मायात्मक स्व ( आत्मीय ) अर्थ में अण् प्रत्यय होता है ।

तद्वान्—मतुबन्त प्रथमासमर्थ प्रातिपदिक से स्त्रीत्वविशिष्ट षष्ठ्यर्थ में यत् प्रत्यय होता है यदि प्रथमासमर्थ उपधान मन्त्रात्मक हो और षष्ठ्यर्थ इष्टकात्मक हो तथा प्रकृतिभाग के मतुप् का लुक् भी हो जाता है ।

अश्विमानण्—अश्विमत् शब्द से उपर्युक्त परिस्थिति में अण् प्रत्यय होता है ।

यतोऽपवादः। अश्विमानुपधानो यन्त्र आसामिष्टकानामिति विगृह्याण्विधीयते, तत्र मतुपो लुकि कृते "इनण्यनपत्ये" इति प्रकृतिभावः–आश्विनीरुपदधाति॥

## वयस्यासु मूर्ध्नो मतुप्॥ १२७॥

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। यस्मिन्मन्त्रे वयःशब्दो मूर्द्धन्शब्दश्च विद्यते स वयस्वानपि भवति मूर्द्धन्वानपि। यथा—मूर्द्धा वयः प्रजापतिश्छन्द इति। तत्र वयस्वच्छब्दादिव मूर्द्धन्वच्छब्दादपि यति प्राप्ते मतुब् विधीयते। मूर्द्धन्वतीरुपदधाति, वयस्या एव मूर्द्धन्वत्यः। वयस्यास्विति किम्? यत्र मूर्द्धन्शब्द एव केवलो न वयःशब्दः, तत्र मा भूत्। मूर्द्धवत इति वक्तव्ये मूर्ध्नं इत्युक्तं मतुपो लुकं भाविनं चित्ते कृत्वा॥

## मत्वर्थे मासतन्वोः॥ १२८॥

यस्मिन्नर्थे मतुब्विहितस्तस्मिंश्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः। प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो भवति। मत्वर्थीयानामपवादः नभांसि विद्यन्ते यस्मिन्मासे नभस्यो मासः। सहस्यः। तपस्यः। मधव्यः। नभःशब्दोऽभ्रेषु वर्त्तते। तन्वां खल्वपि–ओजोऽस्यां विद्यते ओजस्या तनूः, रजस्या। मासतन्वोरिति किम्? मधुमता पात्रेण चरति। मासतन्वोरनन्तरार्थे वा–मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः। ॐलुगकारेकाररेफाश्च वक्तव्याःॐ। लुक् तावत्–तपश्च तपस्यश्च, नभश्च नभस्यश्च, सहश्च सहस्यश्च। नपुंसकलिङ्गं छान्दसत्वात्। अकारः–इषो मासः, ऊर्जो मासः। इकारः–शुचिर्मासः। रेफः–शुक्रो मासः॥

## मधोर्ञ च॥ १२९॥

मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति, चकाराद्यच्च, उपसंख्यानाल्लुक् च। माधवः। मधव्यः। मधुः। तन्वां खल्वपि–माधवा, मधव्या, मधुः, तनूः॥

## ओजसोऽहनि यत्खौ॥ १३०॥

मत्वर्थ इत्येव। ओजःशब्दान्मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये। ओजस्यमहः, ओजसीनमहः॥

## वेशोयश आदेर्भगाद्यल्॥ १३१॥

मत्वर्थ इत्येव। वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद्वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् प्रत्ययो भवति। लकारः स्वरार्थः। वेशोभगो विद्यते यस्य स

---

वयस्यासु—वयस्या के अभिधेय होने पर मूर्धन् शब्द से मतुप् प्रत्यय होता है।

मत्वर्थे—जिस अर्थ में मतुप् का विधान किया गया है उसी अर्थ में वैदिक-विषय में मास तथा तनु के अभिधेय होने पर यत् प्रत्यय होता है।

लुगकारेकार—उक्त यत् प्रत्यय का लुक् भी हो जाता है और यत् के स्थान में मत्वर्थ में अकार, इकार तथा रेफ भी यथास्थल हो जाते हैं—यह समझना चाहिए।

मधोर्ञ—मधु शब्द से मत्वर्थ में ञ तथा यत् प्रत्यय भी होते हैं और उपसंख्यान के कारण प्रत्ययों का लुक् भी हो जाता है।

ओजसो—दिन के अभिधेय होने पर ओजस् शब्द से मतुबर्थ में यत् तथा ख प्रत्यय होते हैं।

वेशो—वेशःपूर्वक तथा यशःपूर्वक भगशब्दान्त प्रातिपदिकों से मत्वर्थ में यल् प्रत्यय होते हैं।

वेशोभग्यः । यशोभग्यः । वेश इति बलमुच्यते । श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । वेशश्चासौ भगश्च वेशोबलं श्रीप्रभृति भगः, सोस्यास्तीति वेशोभग्यः ॥

## ख च ॥ १३२ ॥

वेशोयशआदेर्भगान्तात्प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति । योगविभागो यथासंख्यनिरासार्थ उत्तरार्थश्च । चकाराद्यत् । वेशोभगीनः । वेशोभग्यः । यशोभगीनः । यशोभग्यः ॥

## पूर्वैः कृतमिनयौ च ॥ १३३ ॥

मत्वर्थ इति निवृत्तम् । निर्देशादेव समर्थविभक्तिः । पूर्वशब्दात्तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थ इन य इत्येतौ प्रत्ययौ भवतः, चकारात्ख च । पथिभिः पूर्विणैः । पूर्व्यैः । पूर्वीणैः । पूर्व्यैरिति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते । तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा ॥

## अद्भिः संस्कृतम् ॥ १३४ ॥

निर्देशादेव समर्थविभक्तिः । अप् शब्दात्तृतीयासमर्थात्संस्कृतमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । यस्येदमप्यं हविः, अद्भिः संस्कृतमिति ॥

## सहस्रेण संमितौ घः ॥ १३५ ॥

निर्देशादेव समर्थविभक्तिः । सहस्रशब्दात्तृतीयासमर्थात् सम्मितावित्येतस्मिन्नर्थे घः प्रत्ययो भवति । सम्मितस्तुल्यः सदृशः । अयमग्निः सहस्रियः । सहस्रतुल्य इत्यर्थः । केचित्तु समिताविति पठन्ति । तत्रापि समित्या सम्मित एव लक्षयितव्यः, तत्र छन्दसि प्रयोगदर्शनात् ॥

## मतौ च ॥ १३६ ॥

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति । सहस्रमस्य विद्यते सहस्रियः । "तपः सहस्राभ्यां विनीनी", "अण् च" इत्यनयोरपवादः ॥

## सोममर्हति यः ॥ १३७ ॥

निर्देशादेव समर्थविभक्तिः । सोमशब्दाद् द्वितीयासमर्थादर्हतीत्येतस्मिन्नर्थे यः प्रत्ययो भवति । सोममर्हन्ति सोम्या ब्राह्मणाः । यज्ञार्हा इत्यर्थः । यति प्रकृते यग्रहणम् स्वरे विशेषः ॥

## मये च ॥ १३८ ॥

सोमग्रहणं यश्चानुवर्त्तते । मय इति मयडर्थो लक्ष्यते । सोमशब्दान्मयडर्थे यः प्रत्ययो भवति । आगतविकारावयवप्रकृता मयडर्थाः । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', 'मयट् च', 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः', 'तत्प्रकृतवचने मयट्' इति । तत्र यथायोगं समर्थविभक्तिः । सोम्यं मधु पिबन्ति । सोममयमित्यर्थः ॥

---

ख च—वेशःपूर्वक तथा यशःपूर्वक भगशब्दान्त प्रातिपदिकों से ख प्रत्यय भी मत्वर्थ में होता है ।

पूर्वैः—तृतीयासमर्थ पूर्व शब्द से कृत अर्थ में इन् तथा य प्रत्यय होते हैं ।

अद्भिः—तृतीयासमर्थ अप् शब्द से संस्कृत अर्थ में यत् प्रत्यय होता है ।

सहस्रेण—तृतीयासमर्थ सहस्र शब्द से तुल्य अर्थ में घ प्रत्यय होता है ।

मतौ च—मत्वर्थ में भी तृतीयासमर्थ सहस्र शब्द से घ प्रत्यय होता है ।

सोमम्—द्वितीयासमर्थ सोम शब्द से 'अर्हति' ( योग्य है ) अर्थ में य प्रत्यय होता है ।

मये च—सोम शब्द से मयट् के अर्थ में भी य प्रत्यय होता है ।

## मघोः ॥ १३९ ॥

यशब्दो निवृत्तः। मधुशब्दान्मयडर्थे यत् प्रत्ययो भवति । मधव्यान् स्तोकान् । मधुमयानित्यर्थः ॥

## वसोः समूहे च ॥ १४० ॥

वसुशब्दात् समूहे वाच्ये यत् प्रत्ययो भवति चकारान्मयडर्थे च । यथायोगं समर्थ-विभक्तिः। वसव्यः समूहः, मयडर्थो वा। ॐअक्षरसमूहे छन्दसः स्वार्थं उपसंख्यानम्ॐ। ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः। सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः। छन्दःशब्दादक्षरसमूहे वर्त्तमानात् स्वार्थे यत् प्रत्ययः। वसुशब्दादपि वक्तव्यः। हस्तौ गृहीतस्य वहुभिर्वसव्यैः। वसुभिरित्यर्थः। अग्निरीशे वसव्यस्य। वसोरित्यर्थः ॥

## नक्षत्राद् घः ॥ १४१ ॥

नक्षत्रशब्दाद् घः प्रत्ययो भवति स्वार्थे । समूह इति नानुवर्त्तते । नक्षत्रियेभ्यः स्वाहा ॥

## सर्वदेवात्तातिल् ॥ १४२ ॥

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति छन्दसि विषये स्वार्थिकः । सर्वतातिः । देवतातिः ॥

## शिवशमरिष्टस्य करे ॥ १४३ ॥

करोतीति करः, प्रत्ययार्थः । तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः कर इत्येतस्मिन्नर्थे तातिल् प्रत्ययो भवति। शिवं करोतीति शिवतातिः। शंतातिः। अरिष्टतातिः ॥

## भावे च ॥ १४४ ॥

भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल् प्रत्ययो भवति। शिवस्य भावः शिवतातिः। शंतातिः। अरिष्टतातिः। यतः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययोऽधिक्रियते ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ॥

समाप्तश्च चतुर्थोऽध्यायः ॥

॥ शुभम् ॥

---

मघोः—मधु शब्द से मयट् के अर्थ में यत् प्रत्यय होता है।

वसोः—वसु शब्द से समूह तथा मयडर्थ में यत् प्रत्यय होता है।

अक्षर—अक्षरसमूह के वाच्य होने पर स्वार्थ में छन्दस् शब्द से यत् प्रत्यय का विधान समझना चाहिए।

नक्षत्रात्—नक्षत्र शब्द से स्वार्थ में घ प्रत्यय होता है।

सर्व—सर्व तथा देव शब्दों से स्वार्थ में तातिल् प्रत्यय होता है वेद में।

शिव—षष्ठीसमर्थ शिव, शम् तथा अरिष्ट शब्दों से करने के अर्थ में तातिल् प्रत्यय होता है।

भावे च—भाव अर्थ में भी शिव आदि शब्दों से वेद-विषय में तातिल् प्रत्यय होता है।

चतुर्थाध्याय का चतुर्थ पाद समाप्त हुआ।

चतुर्थाध्याय समाप्त ॥

# काशिका

## पूर्वार्धसूत्रानुक्रमणिका

